नृमेध आङ्गिरस । इन्द्र । बृहती । ( ऋ० ८ । ९९ । १ )

त्वामिदा ह्यो नरोऽपीप्यन्वज्रिन्भूर्णयः ।
स इन्द्र स्तोमवाहसामिह श्रुध्युप स्वसरमा गहि ॥३०२॥

वसिष्ठो मैत्रावरुणिः । उषा । बृहती । ( ऋ० ७ । ८१ । १ )

प्रत्यु अदर्श्यायत्यु१च्छन्ती दुहिता दिवः ।
अपो महि व्ययति चक्षसे तमो ज्योतिष्कृणोति सूनरी ॥३०३॥

त्वामिदा ह्यो नरोऽपीप्यन्वज्रिन्भूर्णयः ।
स इन्द्र स्तोमवाहस इह श्रुध्युप स्वसरमा गहि ॥३०२॥
प्रत्यु अदर्श्यायत्यु३च्छन्ती दुहिता दिवः ।
अपो मही वृणुते चक्षुषा तमो ज्योतिष्कृणोति सूनरी ॥३०३॥

---

(१०।१।१)　　॥ माधुच्छन्दसम् । मधुच्छन्दा बृहतीन्द्रः ॥

त्वामिदा । होइ । हियोनराऽ६ए॥ अपाइप्यन्वा । जाइन्भूर्णाऽ२३४याः ।
सइन्द्रस्तोमवाहसः। इहाश्रूधा । औहोऽ३४वाहाइ॥ उपास्वासा । औहोऽ३४वाहा ॥
रमागाऽ२३हाऽ३४३इ । ओऽ२३४५इ ॥डा॥　( दी० १० । प० ११ । मा० १० )१३( धौ । ५१५)

दश सप्तम खण्डः ॥ ७ ॥ दशति. ॥ १ ॥

(१०।१।१)　　॥ उपसस्साम । उषा बृहतीन्द्रः ॥

प्रताइ । इहा । आइ । इहा । उवद् । शिऽ३आयती । आयती॥ उच्छा । इहा । आऽ।
इहा । तीदु । हिऽ३तादिवाऽ२ः । आदिवाऽ२ः ॥ अपो । इहा । ओऽ। इहा ।
माहीवृणुतेच । क्षुपातमाऽ२ः । आतमाऽ२ः॥ ज्योताइ । इहा । आइ । इहा ।
कृणो । तिऽ३सूनरीऽ२ । ओंमरीऽ२३४३ । ओऽ२३४५इ ॥ डा ॥
( दी० ५ । प० ३० । मा० १० )१४ ( मौ । ५१६ )

---

[ साम-तन्त्र-सूत्राणि ] [५१५] १३ ( पृथक् सूत्राणि न सन्ति )　　[५१६]१४ प्रत्यु ५.३.११;
यरेऽरि १२ ८ ६,
सा०गा० १७

वसिष्ठो मैत्रावरुणि । अश्विनौ । बृहती । ( ऋ० ७।७४।१ )

इमा उ वां दिविष्टय उस्रा हवन्ते अश्विना ।
अयं वामह्वेऽवसे शचीवसू विशंविशं हि गच्छथः ॥२०४॥

प्रस्कण्व काण्व । अश्विनौ । बृहती । ( ऋ० १।४७।१ )

अयं वां मधुमत्तमः सुतः सोम ऋतावृधा ।
तमश्विना पिबतं तिरोअह्न्यं धत्तं रत्नानि दाशुषे ॥२०६॥

इमा उ वां दिविष्टय उस्रा हवन्ते अश्विना ।
अयं वामह्वेऽवसे शचीवसू विशंविशꣳ हि गच्छथः ॥२०४॥

अश्विनौ वैवस्वतौ । अश्विनौ । बृहती । ( न प्राप्यते )

कुष्ठः को वामश्विना तपानो देवा मर्त्यः ।
घ्नता वामश्नया क्षपमाणोऽꣳशुनेत्थमु आद्वन्यथा ॥२०५॥

अयं वां मधुमत्तमः सुतः सोमो दिविष्टिषु ।
तमश्विना पिबतं तिरो अह्न्यं धत्तꣳ रत्नानि दाशुषे ॥ २०६ ॥

---

(२०४।१) ॥ अश्विनोः साम । अश्विनौ बृहतीन्द्रः ( अश्विनौ वा ) ॥

इमाउवांदिविष्टयाऽ२३४ऐही ॥ उस्राहवन्तेअश्विनाऽ२३४ऐही ॥
अयंवामह्वसेशचीवसूऽ२३४ऐही ॥ विशंविशꣳहिगच्छाथाऽ२३४ऐही । हौंऽ५६ ॥ डा ॥

( दी० १२ । प० ६ । मा० ७ )२५ ( चे । ५१७ )

(२०५।१) ॥ अश्विनोः संयोजनम् । अश्विनौ बृहतीन्द्रः ( अश्विनौ वा ) ॥

कुष्ठःकोवामश्विनाआ ॥ तापानोदे । वामर्तायाऽ३ः । होवाऽ३हाऽ३४इ ।
घ्नताऽ३४वामाऽ१ । श्नायाऽ३ । होवाऽ३हाऽ३४इ । क्षपाऽ३४माणाः ।
आꣳशुनाऽ२ ॥ होवाऽ३हाऽ३४इ ॥ इत्थाऽ३४मुवाऽ३त् ॥ उवाऽ२त् ।
यथाऽ२३४औहोवा ॥ ऊऽ२३४पा ॥

( दी० १० । प० १४ । मा० ६ )२६ ( श्वो । ५१८ )

(२०६।१) ॥ अश्विनोः साम । अश्विनौ बृहतीन्द्रः ( अश्विनौ वा ) ॥

अयाऽ२४म् । अयंवाम ॥ धुमत्ताऽ२माः ॥ सुतःसोमाऽ२दिविष्टिषु । ओऽ३हा ।
ओऽ२हाऽ३४ । ओहा । तामश्विनापिबतंतिरोअह्नियम् । ओऽ३हा । ओऽ२हाऽ३४ ।
ओहा ॥ धताꣳराऽ१त्नाऽ२ । ओऽ२हा । ओऽ३हाऽ३४ । ओहा ॥ निदाऽ२३ ।
शूऽ२पाऽ२३४औहोवा ॥ ऊऽ२३४पा ॥

( दी० १० । प० १८ । मा० ५ )२७ ( च्यु । ५१९ )

---

[ साम-तन्त्र-सूत्राणि ][५१७] २५ ( पृथक् सूत्राणि न सन्ति ) [५१८]२६ सावो ३ १० ६,
४९ (प) प्रथमे '६ ६ ६,[क्वचित् पुस्तके "पत्रपमे" इति वर्तते तत्प्रमादाल्लिखितम्]][५१९]२७ अन्त्ये १ १ २, ओपे ११६७,

मेधातिथि-मेध्यातिथी काण्वौ । इन्द्र । बृहती । ( ऋ० ८ । १ । २० )

मा त्वा सोमस्य गल्दया सदा याचन्नहं गिरा ।
भूर्णिं मृगं न सवनेषु चुक्रुधं क ईशानं न याचिषत् ॥३०७॥

देवातिथि० क ण्व । इन्द्र । बृहती । ( ऋ० ८ । ४ । ११ )

अध्वर्यो द्रावया त्वं सोममिन्द्रः पिपासति ।
उप नूनं युयुजे वृषणा हरी आ च जगाम वृत्रहा ॥३०८॥

वसिष्ठो मैत्रावरुणि । इन्द्र । बृहती । ( ऋ० ७ । ३२ । २४ )

अभी षतस्तदा भरेन्द्र ज्यायः कनीयसः ।
पुरूवसुर्हि मघवन्त्सनादसि भरेभरे च हव्यः ॥३०९॥

आ त्वा सोमस्य गल्दया सदा याचन्नहं ज्या
भूर्णिं मृगं न सवनेषु चुक्रुधं क ईशानं न याचिषत् ॥ ३०७ ॥
अध्वर्यो द्रावया त्वꣳ सोममिन्द्रः पिपासति ।
उपो नूनं युयुजे वृषणा हरी आ च जगाम वृत्रहा ॥ ३०८ ॥
अभीषतस्तदा भरेन्द्र ज्यायः कनीयसः ।
पुरूवसुर्हि मघवन्बभूविथ भरेभरे च हव्यः ॥ ३०९ ॥

---

(३०७।१) ॥ सोमसाम । सोमो बृहतीन्द्रः (सोमो वा )॥

आत्वासोमा । स्य । गल्दाऽ२याऽ२३४औहोवा । सदाऽ२याचन्नहंजियाऽ२३ ।
भूर्णाओऽ२३४वा । मृगन्नसवनेषुचुक्रुधम् ॥ कईशाऽ२३नाम् ॥ नायाचिषत् ।
इडाऽ२३भाऽ३४३ । औऽ२३४५६ ॥ डा ॥ ( दी० १० । प० ११ । मा० ७ )२८ ( पे । ५२० )

(३०८।१) ॥ आजमाययम् । अजमायुर्बृहतीन्द्रः ॥

अध्वर्योद्राऽ५वयातुवाम् ॥ सोमामिन्द्राऽ२ः । पिपासाऽ१तीऽ२ । उपोऽ२नूनयुयुजेवृ ।
षणाऽ१हारीऽ२ ॥ आचाजाऽ२३गा ॥ मवृत्रहा । औऽ३होवा । हौऽ५६ ॥डा॥
( दी० ७ । प० १० । मा० ३ )२९ ( त्रि । ५२१ )

(३०९।१) ॥ समुद्रमैयमेधम् । प्रियमेधा बृहतीन्द्रः ॥

अभीषतस्तदाहाउ ॥ भरा । इन्द्रज्यायःकनीयाऽ२३साः । पुरूवसुर्हिमघवन्नभूवाऽ२३इथा ॥
भराइभाऽ२३रे ॥ चहव्यः । इडाऽ२३भाऽ३४३ । औऽ२३४५६ ॥ डा ॥
( दी० ६ । प० ९ । मा० ६ )३० ( घू । ५२२ )

---

[ साम-तन्त्र-सूत्राणि । [५२०]२८[५२१]२९[५२२]३० ( पृथक् सूत्राणि न सन्ति )

वासिष्ठो मैत्रावरुणि । इन्द्र । बृहती । ( ऋ० ७ । ३२ । १८ )

यदिन्द्र यावतस्त्वमेतावदहमीशीय ।
स्तोतारमिद्दिधिषेय रदावसो न पापत्वाय रासीय ॥३१०॥

नृमेध आङ्गिरस । इन्द्र । बृहती । ( ऋ० ८ । ९९ । ५ )

त्वमिन्द्र प्रतूर्तिष्वभि विश्वा असि स्पृधः ।
अशस्तिहा जनिता विश्वतूरसि त्वं तूर्य तरुष्यतः ॥३११॥

यदिन्द्र यावतस्त्वमेतावदहमीशीय ।
स्तोतारमिद्दधिषे रदावसो न पापत्वाय रंसिषम् ॥ ३१० ॥
त्वमिन्द्र प्रतूर्तिष्वभि विश्वा असि स्पृधः ।
अशस्तिहा जनिता वृत्रतूरसि त्वं तूर्य तरुष्यतः ॥३११॥

---

(३१०।१)   ॥ वैरूपे द्वे । द्वयोरिन्द्रो बृहतीन्द्रः ॥

यदिन्द्राऽ२३यावतस्तुवाम् ॥ एतावदहमीशीया । स्तोताराऽ२३मीत् । दाधिषे ।
रदावाऽ१साऽ२उ ॥ नपापाऽ२३४त्वा ॥ यारोंवाओंऽ२३४वा । साऽ५इयोऽ६हाइ ॥

( दी० ९ । प० ८ । मा० ६ )३१ ( दू । ५२३)

(३१०।२)
यदिन्द्रयावतस्तुवाम् ॥ आइताऽ३ । वादाऽ२हामी । शायाऽ३ऽऽ२ । स्तोतारामीऽ२३त् ।
दधिषेरदा । वासाऽ३ऽऽ२उ ॥ नापापात्वाऽ२३ ॥ यारोंवाओंऽ२३४वा । साऽ५इयोऽ६हाइ ॥

( दी० ४ । प० १० । मा० ७ )३२ ( ने । ५२४ )

(३११।१)   ॥ वैश्वदेवम् । विश्वेदेवा बृहतीन्द्रः ॥

त्वमिन्द्रोंहाइ । प्रतूर्तिष्वोंवा ॥ अभिविश्वाः । असाइस्पाऽ१र्द्धाऽ२ः । अशस्तिहाजनिताश्च ।
भ्रातूऽ१रासाऽ२इ ॥ त्वा०तूऽ१र्याऽ२ ॥ तरुष्यता । औऽ३होंवा । होऽ५इ ॥ डा ॥

(दी० ८ । प० ११ । मा० ६ )३३ ( तू । ५२५)

---

[ साम-तन्त्र-सूत्राणि ] [५०३]३१ संधुर ७ ९ ८, चान् ७ ९ ७,   [५०४]३० तन्नमभरं मम्वरे
गोच चतुर्थप्रभमये १७ ३,   [५०५ ]३३ ( पृथर सूत्राणि न सन्ति )

नोधा गौतम । इन्द्र । बृहती । ( ऋ० ८।८८।५ )

प्र हि रिरिक्ष ओजसा दिवो अन्तेभ्यस्परि ।

न त्वा विव्याच रज इन्द्र पार्थिवमनु स्वधां ववक्षिथ ॥३१२॥

वसिष्ठो मैत्रावरुणिः । इन्द्र । त्रिष्टुप् । ( ऋ० ७।२१।१ )

असावि देवं गोऋजीकमन्धो न्यस्मिन्निन्द्रो जनुषेमुवोच ।

बोधामसि त्वा हर्यश्व यज्ञैर्बोधा नः स्तोममन्धसो मदेषु ॥३१३॥

प्र यो रिरिक्ष ओजसा दिवः सदोभ्यस्परि ।

न त्वा विव्याच रज इन्द्र पार्थिवमति विश्वं ववक्षिथ ॥३१२॥

असावि देव गोऋजीकमन्धो न्यस्मिन्निन्द्रो जनुषेमुवोच ।

बोधामासि त्वा हर्यश्व यज्ञैर्बोधा न स्तोममन्धसो मदेषु ॥३१३॥

---

(३१२।१)　　　　॥ पूरीषम् । अथर्वा बृहतीन्द्र ॥

प्रयोरिरिक्षओजसाऽ६ए॥ दिवःसदोऽरभ्यस्परि । नत्वाविव्या । औहोऽ३वा । चा । रजः ।
औहोऽ३याइ । द्रपार्थिवाम्॥ अतिवाऽ२३३श्वाम्॥ वावक्षिथ । इडाऽ२३भाऽ३४३ ।
ओऽ२३४५ इ ॥डा॥　　　　( दी० ६ । प० ११ । मा० ८ )३४ ( गी । ५२६ )

एकादश अथम खण्ड ॥८॥ दशति ॥२॥ ॥ इति बार्हतमै न्द्र ॥

(३१३।१)　　　　॥ प्रावर्यम् । प्रवर्यः, त्रिष्टुविन्द्र ॥

असौहोवाऽ३हाइ । वीऽ२३४दे । वांगोऋ । जीकमन्धाः॥ न्यौहोवाऽ३हा । स्मीऽ२३४नी ।
द्रोजनु । पेमुवोचा॥ बोधौहोवाऽ३हाइ । माऽ२३४सी । त्वाहरि । अश्वयज्ञैः ॥
बोधौहोवाऽ३हाइ । नाऽ२३४स्तो । ममन्ध । सोऽ२४३ । माऽ३दाऽ५इपूऽ६५६ ।
　　　　( दी० ११ । प० १७ । मा० ७ )३५ ( ग्वे । ५२७ )

(३१३।२)　　　　॥ निहव निहवम् वा ॥ वसिष्ठस्त्रिष्टुबिन्द्रः ॥

आइहीऽ३ । आइही । एहिया । ओऽ२३४वा । हाइ । असाविदेवगोऋजीकऽ३मान्धाऽ३ः ।
आन्धाः । अन्धा । ओऽ२३४वा । हाइ॥ न्यास्मिन्निन्द्राजनुषेमुऽ२ वोचाऽ२ । वोचा । वोचा ।
ओऽ२३४वा । हाइ॥ बोधामसित्वाहर्यश्वऽ२याज्ञैऽ२ः । याज्ञैः । यज्ञा । ओऽ२३४वा ।
हाइ॥ बोधानस्तोममन्धसोमऽ२दाइषूऽ२ । आइषू । एषुवा । ओऽ२३४वा । हाइ ।
आइहीऽ३ । आइही । एहिया । ओऽ२३४वा । हाऽ२४ । ओहोवा॥ ईऽ२३४५॥
　　　　( दी० १९ । प० ३२ । मा० १६ )३६ ( श्रु । ५२८ )

॥ इति ग्रामे नवम नऽप्तमस्यार्धे प्रपाठक ॥

---

[साम-तन्त्र-सूत्राणि] [५२६]३४९७१०२ [५२७]३५ ष्यायु नति ११=१ [५२८]३६(पृथक् सूत्राणि न सन्ति)

वसिष्ठो मैत्रावरुणि । इन्द्र । त्रिष्टुप् । ( ऋ० ७।२४।१ )

योनिष्ट इन्द्र सदने अकारि तमा नृभिः पुरुहूत प्र याहि ।
असो यथा नोऽविता वृधे च ददो वसूनि ममदश्च सोमैः ॥३१४॥

गातुरात्रेय । इन्द्र । त्रिष्टुप् । ( ऋ० ५।३२।१ )

अदर्दरुत्समसृजो वि खानि त्वमर्णवान्बद्बधानाँ अरम्णाः ।
महान्तमिन्द्र पर्वतं वि यद्वः सृजो वि धारा अव दानवं हन् ॥३१५॥

योनिष्ट इन्द्र सदने अकारि तमा नृभिः पुरूहूत प्र याहि ।
असो यथा नोऽविता वृधश्चिद्दो वसूनि ममदश्च सोमैः ॥३१४॥
अदर्दरुत्समसृजो वि खानि त्वमर्णवान्बद्बधानाँ अरम्णाः ।
महान्तमिन्द्र पर्वतं वि यद्वः सृजन्धारा अव यद्दानवान्हन् ॥३१५॥

(३१४।१) ॥ योनिनी द्वे । द्वयोर्गृत्समदः त्रिष्टुविन्द्रः ॥

योनीः । तआइ । द्राऽ२सद । नाअकारी ॥ तामा । नृभाइः । पुरुहूऽ३ । ताप्रयाही ॥
आसाः । यथा । नोऽ२अवि । तावृधश्चीत् ॥ दादाः । वसू । नीऽ२मम । दाऽ३४३ः ।
चाऽ२सोऽ६माऽ६५६ईः ॥ ( दी० । नास्ति । प० १७ । मा० १३ ) १( धि । ५२९ )

(३१४।२)

योनिष्टआइ । द्रसदनाइ । हौवा ॥ आकाऽ३ । राइतमानृभीः । हौवा । पुऽ । रूहूऽ३ ।
ताप्रयाही । हौवा । आसोयथा । नोअविता । हौवा ॥ वाद्धोऽ३ः । चाइददोवसू ।
हौवा ॥ नाइममदः । चसोमैः । हौवा । होऽ६इ ॥ डा ॥

( दी० ६ । प० २१ । मा० १२ )१ ( का । ५३० )

(३१५।१) ॥ औरक्षये द्वे । द्वयोरुरक्षयस्त्रिष्टुविन्द्रः ॥

अदर्दरूत् ॥ समसृजोविखानि । त्वमर्णाऽ२३४वान् । बद्बधानाऽ२अराम्णाः ।
महान्ताऽ२३४मी । द्रपर्वतंवियाद्वः ॥ सृजाद्धाऽ२३४राः ॥ अवयदान । वाऽ२३न्हाऽ३४३न् ।
ओऽ२३४५इ ॥ डा ॥ ( दी० ५ । प० ११ । मा० ८ )३ ( पै । ५३१ )

[साम-तन्त्र-सूत्राणि][५२९]१ तोण् ८ ९ ६, [५३०]१ इन्द्रसिवानि ५ ५ ५, योनिः ७ ७ २, गमर् ७ ३ ४, [५३१]३ देरि गुम १ ४ ३, गधि दबु नौरठणादिन्याम २ ३ ८, देरि ६ ५ ५

पृथुर्वैन्य । इन्द्र । त्रिष्टुप् । ( ऋ० १० । १४८ । १ )

सुष्वाणास इन्द्र स्तुमसि त्वा ससवांसश्च तुविनृम्ण वाजम् ।
आ नो भर सुवितं यस्य चाकन्त्मना तना सनुयाम त्वोताः ॥२१६॥

सुष्वाणास इन्द्र स्तुमसि त्वा सनिष्यन्तश्चित्तुविनृम्ण वाजम् ।
आ नो भर सुवितं यस्य कोना तना त्मना सह्यामा त्वोताः ॥ २१६ ॥

(२१५।१)

अदर्देरुत्समसृजाः॥ विखानि । त्वमर्णवान्बद्बधानाँऽअराऽ२३म्णाः ।
महान्तमिन्द्रपर्वतंवियाऽ२३द्वाः॥ सृजाद्धाराऽ२ः॥ अर्वाऽ२यद्दान । वाऽ२ ।
याऽ२३४औहोवा॥ हाऽ२३४५न् । ( दी० १० । प० ९ । मा० ७ )४( भे । ५३२ )

(२१६।१) पार्थे द्वे । द्वयोः (पृथो वैन्यः) पार्थेस्त्रिष्टुबिन्द्रः।

सुष्वाणासाः॥ इन्द्रस्तु । मसित्वा । सनिष्यन्तश्चित्तुविनृ । म्णवाऽ२३४जाम् ।
आनः । भराओऽ२३४वा । सुवितंयस्यको । नाऽ॥ तानात्मांना॥ सहिया । माऽ३४२ ।
तुऽ२वोऽ५ताऽ६५६ः ॥ ( दी० ३ । प० १२ । मा० ५ )५( जु । ५३३ )

(२१६।२)

ओऽ२होऽ२होइ । सुऽ२३४ष्वा । णासाः । इन्द्रस्तु । मसित्वा॥ ओऽ२होऽ२होइ ।
साऽ२३४नी । ष्यन्ताः । चीऽ२त्तुवि । नृम्णवाजाम्॥ ओऽ२होऽ२होइ ।
आऽ२३४नाः । भरा । सुवितऽ२म् । यस्यकोना॥ ओऽ२होऽ२होइ ।
ताऽ२३४ना । त्मना । सहिया । माऽ२४२ । तुऽ२वोऽ५ताऽ६५६ः ॥
( दी० २ । प० २१ । मा० १० )६( चौ । ५३४ )

[ साम-तन्त्र-सूत्राणि] [५३२]४ [५३४]६ ( पृथक् सूत्राणि न सन्ति ) [५३३]५ वेद सूत्राया ७११०,

सामगुराम्णम । इन्द्रः नीगुष्ठ । त्रिष्टुप् । ( ऋ० १० । ४७ । १ )

जगृभ्मा ते दक्षिणमिन्द्र हस्तं वसूयवो वसुपते वसूनाम् ।
विद्मा हि त्वा गोपतिं शूर गोनामस्मभ्यं चित्रं वृषणं रयिं दाः ॥३१७॥

जगृभ्मा ते दक्षिणमिन्द्र हस्तं वसूयवो वसुपते वसूनाम् ।
विद्मा हि त्वा गोपतिꣳ शूर गोनामस्मभ्यं चित्रं वृषणꣳ रयिं दाः ॥३१७॥

(३१७।१) ॥ सौपर्णे द्वे । द्वयोः सुपर्णस्त्रिष्टुबिन्द्रः ॥

जगृभ्मातेदक्षिणमोहाओहाऽ६ए॥ इन्द्रहाऽ२३स्ताम् । वसूयवो । वसुपाऽ३ । ताइवसू ।
नाम् । ओऽ३ । हा । ओऽ३ । हाऽ३ए॥ विद्माहित्वा । गोपतीऽ३म् । शूरगो ।
नाम् । ओऽ३ । हा । ओऽ३ । हाऽ३ए॥ अस्मभ्यंचाइ । त्राऽ३०वृष । णꣳरयिम् ।
दाः । ओऽ३ । हा । ओऽ३ । हाऽ३ए । रयाइन्दाऽ३२उवाऽ३ । ऊऽ३४पा ।
औहोऔहोवाऽ२३४५हाउ । वा॥ ईऽ२३४५ ॥ (गी० । ११ । प० ३१ । मा० १७)७( क्रे । ५३५ )

(३१७।२)

जगृभ्मातदक्षिणम् । औहोहोवाहाइ॥ इन्द्राहाऽ२३४स्ताम् । वसूयवो । वसुपाऽ३ ।
ताइवसू । नौ । वाओऽ२३४वा । हाऽ३हाइ॥ विद्माहित्वा । गोपतीऽ३म् । शूरगो ।
नौ । वाओऽ२३४वा । हाऽ३हाइ । अस्मभ्यंचाइ । त्राऽ३०वृष । णꣳरयिम् । दौ ।
वाओऽ२३४वा । हाऽ३हाऽ३४ । औहोवा॥ ईऽ२३४५ ॥

( गी० ९ । प० २३ । मा० १७ ) ८( द्रा । ५३६ )

(३१७।३) वात्सप्राणि त्रीणि । त्रयाणां वत्सप्रिस्त्रिष्टुबिन्द्रः । तृतीयं वात्सप्रम् ॥

होईऽ२ । होईऽ२ । होईऽ२ । जगृभ्मातेदक्षिणम् । इन्द्रहास्ताऽ२म् । हास्ताऽ२म् । हास्ताऽ२म् ॥
वसूयवोऽ२वसुप । तेवसूनाऽ२म् । सूनाऽ२म्॥ सूनाऽ२म् । विद्माहित्वागोपतिम् ।
शूरगोनाऽ२म् । गोनाऽ२म्। गोनाऽ२म्। अस्मभ्यंचित्रंवृष । णꣳरयाइन्दाऽ२ः । आइन्दाऽ२ः ।
आइन्दाऽ२ः । होईऽ२ । होईऽ२ । होयाऽ२ । वाऽ२३४औहोवा॥ ईऽ२३४५ ॥

( गी० ११ । प० २४ । मा० २३ )९( घि । ५३७ )

[ साम-तन्त्र-सूत्राणि][५३५]७[५३६]८[५३७]९ ( पृथक् सूत्राणि न सन्ति )

वसिष्ठो मैत्रावरुणि । इन्द्र । त्रिष्टुप् । ( ऋ० ७ । २७ । १ )

इन्द्रं नरो नेमधिता हवन्ते यत्पार्या युनजते धियस्ताः ।
शूरो नृषाता शवसश्चकान आ गोमति व्रजे भजा त्वं नः ॥३१८॥

इन्द्र नरो नेमधिता हवन्ते यत्पार्या युनजते धियस्ताः ।
शूरो नृषाता श्रवसश्च काम आ गोमति व्रजे भजा त्वं नः　　॥ ३१८ ॥

---

(३१७।४)

आओहोइ । आओहोइ । आओहोऽ६वा । औऽ३होइ । औऽ३होइ । औऽ२३होवा ।
जगृभ्राताइ । दक्षिणाऽ३म् । इन्द्रहस्तम् । द्रहस्तम् । द्रहस्ताम् ॥ वसूयवो । वसूपाऽ३ ।
ताइवसूनाम् । वसूनाम् । वसूनाम् ॥ विद्माहित्वा । गोपतीऽ३म् । शूरगोनाम् । रगोनाम् ।
रगोनाम् ॥ अस्मभ्यंचाइ । त्राऽ३०वृष । णऽरयिन्दाः । रयिन्दाः । रयिन्दाः । आओहोइ ।
आओहोइ । आओहोऽ६वा । औऽ३होइ । औऽ३होइ । औऽ२३होवाऽ३४ । औहोवा ।
ईऽ२३४५ ॥　　( दी० ३४ । प० ३४ । मा० ३१ )१०( प्र । ५३८ )

(३१७।५)　　॥ महावासप्तोत्तरम् ॥

हाउऽ(३)। ओ । होहोवा । ( द्विस्त्रिः )। जगृभ्राताइ । दक्षिणाऽ३म् । इन्द्रहस्तम् ।
द्रहस्तम् । द्रहस्ताम् ॥ वसूयवो । वसूपाऽ३ । ताइवसूनाम् । वसूनाम् । वसूनाम् ॥
विद्माहित्वा । गोपतीऽ३म् । शूरगोनाम् । रगोनाम् । रगोनाम् ॥ अस्मभ्यचाइ ।
त्राऽ३०वृष । णऽरयिन्दाः । रयिन्दाः । रयिन्दाः । हाउऽ(३)। ओऽ । होहोवा । ओऽ। होहोवा ।
ओऽ । हो । होऽ२ । वाऽ२३४ । औहोवा ॥ ईऽ२३४५ ॥

( दी० १२ । प० ३८ । मा० २२ )११( त्रि । ५३९ )

(३१८।१)　　॥ गौरीवितम् । गौरीवितास्त्रिष्टुबिन्द्र ॥

इन्द्रन्नाऽ२३४रो । नेमाधाऽ२३४इता । हवन्ताऽ२३इ ॥ यत्पाराऽ२३४याः ।
यूनाजाऽ२३४ताइ । धियास्ताऽ२३ः ॥ शूरोनाऽ२३४षा । ताश्रावाऽ२३४साः ।
चकामाऽ२३इ ॥ आगोमाऽ२३४ती । व्रजाइभाऽ२३४जा । त्वन्नाऽ३२उवाऽ३ ।
एऽ३ । उपाऽ२३४५ ॥　　( दी० नास्ति । प० १४ । मा० ९ )१२ ( लो । ५४० )

---

[ साम तन्त्र-सूत्राणि][५३८]१० ( पृथक् सूत्राणि न सन्ति )　　[५३९]११ वरे निधृ ११६२
[५४०]१२ ह ६ ८ ५ बृहाया ६ १० ४ वाराया एभि १० १० ४

गौरिवीतिः शाक्त्य । इन्द्र । त्रिष्टुप् । ( ऋ॰ १० । ७३ । ११ )

वयः सुपर्णा उप सेदुरिन्द्रं प्रियमेधा ऋषयो नाधमानाः ।
अप ध्वान्तमूर्णुहि पूर्धि चक्षुर्मुमुग्ध्य१स्मान्निधयेव बद्धान् ॥ ३१९ ॥

वेनो भार्गव । वेन । त्रिष्टुप् । ( १० । १२३ । ६ )

नाके सुपर्णमुप यत्पतन्तं हृदा वेनन्तो अभ्यचक्षत त्वा ।
हिरण्यपक्षं वरुणस्य दूतं यमस्य योनौ शकुनं भुरण्युम् ॥३२०॥

वयः सुपर्णा उप सेदुरिन्द्रं प्रियमेधा ऋषयो नाधमानाः ।
अप ध्वान्तमूर्णुहि पूर्धि चक्षुर्मुमुग्ध्य२स्मान्निधयेव बद्धान् ॥३१९॥
नाके सुपर्णमुप यत्पतन्त८ हृदा वेनन्तो अभ्यचक्षत त्वा ।
हिरण्यपक्षं वरुणस्य दूतं यमस्य योनौ शकुनं भुरण्युम् ॥ ३२० ॥

---

(३१९।१) ॥ वैद्न्वतम् । विद्न्वाँस्त्रिष्टुबिन्द्रः (सूर्यो वा) ॥

वयोहाहाउ ॥ सुपर्णाउपसेदुराइन्द्रम् । प्रियमेधाऋषयोनाधमाऽ२३नाः ।
अपध्वान्तमूर्णुहिपूर्धिचाऽ२३क्षुः ॥ मुमुग्धि । औऽ३होऽ३इ ॥ आऽ२१ । स्माऽ३न्निध ।
येऽ३४३ । वाऽ२वाऽ५द्धाऽ६५६न् ॥ (दा॰ १० । प॰ १० । मा॰ ९ )१३ ( मो । ५४१ )

(३२०।१) ॥ यामम् । यमस्त्रिष्टुबिन्द्रः (यमो वा) ॥

आऽ२याम् । अयायम् । औऽ३होऽ३इ । आऽ२इ । ऊऽ२ । नाकेसुपार्णमुपपात्पतन्ताम् ।
पतन्तम् । औऽ३होऽ३इ । आऽ२इ । ऊऽ२॥ आऽ२याम् । अयायम् । औऽ३होऽ३इ ।
आऽ२इ । ऊऽ२ । हृदावेनांतोअभ्यचाक्षतत्वा । क्षतत्वौऽ३ । होऽ३इ । आऽ२इ । ऊऽ२॥
आऽ२याम् । अयायम् । औऽ३होऽ३इ । आऽ२इ । ऊऽ२ । हिरण्यपाक्षंवरुणास्यदूताम् ।
स्यदूतम् । औऽ३होऽ३इ । आऽ२इ । ऊऽ२॥ आऽ२याम् । अयायम् । औऽ३होऽ३इ ।
आऽ२इ । ऊऽ२ । यमस्ययोनौशकुनांभुरण्युम् । भुरण्युम् । औऽ३होऽ३इ । आऽ२इ ।
ऊऽ२ । आऽ२याम् । अयायम् । औऽ३होऽ३इ । आऽ२इ । ऊऽ२ । वाहाऽ३१उवाऽ२३ ॥
एऽ३ । दिवम् । एऽ३ । दिवम् । एऽ३ । दिवाऽ२३४५म् ।

( दा॰ १४ । प॰ ५२ । मा॰ १९ )१५ ( थो । ५४२ )

---

[ साम तन्त्र-सूत्राणि ] [५४१]१३ ताण्ड्यम् १ ११४, [५४२]१५ नाके ७ १० ५, चतुर्थम् ७ १० ६

सुहोत्रो भारद्वाजः । इन्द्रः । त्रिष्टुप् । ( ऋ० ६ । ३२ । १ )

अपूर्व्या पुरुतमान्यस्मै महे वीराय तवसे तुराय ।
विरप्शिने वज्रिणे शन्तमानि वचांस्यासा स्थविराय तक्षम् ॥३२२॥

वसिष्ठो मैत्रावरुणिः, बृहस्पतिर्नकुलो वा । इन्द्रः । त्रिष्टुप् । ( न ऋग्वेदीय. )

ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन आवः ।
स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः ॥३२१॥
अपूर्व्या पुरुतमान्यस्मै महे वीराय तवसे तुराय ।
विरप्शिने वज्रिणे शन्तमानि वचांऽस्यस्मै स्थविराय तक्षुः ॥३२२॥

---

(३२१।१) ॥ ऋतुसामनी द्वे । ऋतुस्त्रिष्टुबिन्द्रः ( बृहस्पतिर्वा ) ॥

ब्रह्मा । ब्राऽ२३ह्मा । जज्ञानंप्रथमंपुरास्तात् ॥ विसाइ । वाऽ२३इसी ।
मतःसुरुचोवेनआवः ॥ सबू । साऽ२३बू । ध्नियाउपमाअस्यवाइष्ठाः ॥ सताः । साऽ२३ताः ।
चयोनिमसतश्चवाइवाऽ३४३ः । ओऽ२३४५इ ॥ डा ॥

( दी० ६ । प० १८ । मा० १४ ) १५ ( घी । ५४३ )

(३२१।२)

हुवेऽ३हाऽ३इ । हुवेऽ३हाऽ३इ । हिपाऽ३या । ब्रह्मजज्ञा । नाऽ३०प्रथ । मंपुरस्तात् ॥ विसीमताः ।
सुरुचः । वेनआवाः ॥ सबुध्नियाः । उपमाः । अस्यविष्ठाः ॥ सतश्चयो । नीऽ३मस ।
तश्चविवाः । हुवेऽ३हाऽ३इ । हुवेऽ३हाऽ३इ । हि । पाऽ२ः । आऽ२३४ । औहोवा ॥ एऽ३ ।
ऋतममृतम् । एऽ३ । ऋतममृतम् । एऽ३ । ऋतममृताऽ२३४५म् ॥

( दी० ४ । प० २७ । मा० १७ ) १६ ( धे । ५४४ )

(३२२।१) ॥ वारवन्तीयम् । इन्द्रस्त्रिष्टुबिन्द्रः ॥

अपूर्व्याऔहोहोहाइ ॥ पुरुत । मानियस्मै । महेवीरा । याऽ३तव । साइतुराया । विरप्शि ।
नाइवज्रिणे । शाऽ३४३०तमानि ॥ वचांऽसिया । स्माऽ३इस्थावि । रायतक्षूः ॥
स्थविरायतक्षुः । स्थवि । राऽ३४३ । याऽ३ताऽ५क्षूऽ६५६ः ॥ स्थविरायतक्षूऽ२३४५ः ॥

( दी० १० । प० १७ । मा० ९ ) १७ ( फो । ५४५ )

॥ एकोनविंशति प्रथम., नवम खण्डः ॥ ९ ॥ दशति. ॥ २ ॥

---

[ साम-तन्त्र-सूत्राणि ] [५४३]१५ डरे ४.२.९; वेनस्य ६.७४; [५४४]१६ वि ५.६ १,
[५४५]१७ ऊना १.२.८; ओहनि ४.३ ५; णे शु ७.८.५; नव्योरुयरयोः १० २.१;

❀

तिरश्चीराङ्गिरसो, द्युत नो वा मारुतः। इन्द्रः। त्रिष्टुप्। ( ऋ० ८।९६।१३ )

अव द्रप्सो अंशुमतीमतिष्ठदियानः कृष्णो दशभिः सहस्रैः।
आवत्तमिन्द्रः शच्या धमन्तमप स्नेहितीर्नृमणा अधत्त ॥२२३॥

अव द्रप्सो अꣳशुमतीमतिष्ठदीयानः कृष्णो दशभिः सहस्रैः।
आवत्तमिन्द्रः शच्या धमन्तमपस्नीहितिं नृमणा अधद्राः ॥२२३॥

---

(२२३।१) ॥ क्षुरपविणी द्वे। इन्द्रस्त्रिष्टुबिन्द्रः ( इन्द्राबृहस्पती वा )॥

अवद्राऽ२३४प्साः॥ आꣳशूमाऽ२३४तीम्। आतीऽ३। ष्ठाऽ२३४५त्॥ ईयानाऽ२३४ःकृ।
ष्णोदाशाऽ२३४भीः। साहाऽ३। स्राऽ२३४५इः॥ आवत्ताऽ२३४मीं। द्रःशाचीऽ२३४या।
धामाऽ३। ताऽ२३४५म्॥ आपस्नीऽ२३४ही। तिंनृमाऽ२३४णाः। अधाऽ२द्राऽ२३४औहोवा॥
अधाऽ३द्राऽ२३४५ः॥ (दी० ७। प० १६। मा० १०) १८ ( चौ। ५४६ )

(२२३।२)

अवद्रप्साऽ६ए॥ आꣳशुमतीमतिष्ठाऽ२३त्। ईयानःकृष्णाः। दाशभिःसहस्राऽ२३इः॥
आवत्तमिन्द्राः। शाचिशाधमन्ताऽ२३म्॥ अपास्नीहितीम्। नृमणाऽ२३ः। अधाऽ५द्राः।
होऽ५इ॥डा॥ (दी० ५। प० ११। मा० ११) १९ ( प। ५४७ )

(२२३।३) ॥ स्यौमरश्मे द्वे। स्युमरश्मिस्त्रिष्टुबिन्द्रः॥

अवद्रप्साअꣳशुमतीम्। औऽ३होऽ२३४इ। औहोवा॥ आतीऽ२ष्ठात्। औऽ३होऽ३४इ।
औहोवा। ईयानःकृष्णाः। औऽ३होऽ२३४इ। औहोवा। दाश। भाइःसहस्रैः।
औऽ३होऽ२३४इ। औहोवा॥ आवत्तमिन्द्राः। औऽ३होऽ२३४इ। औहोवा। शाऽचि।
याधमन्ताम्। औऽ३होऽ२३४इ। औहोवा॥ अपास्नीहिताम्। औऽ३होऽ३४इ।
औहोवा। नृमाऽ२णाऽ२३४औहोवा॥ अधाऽ३द्राऽ२३४५ः॥

(दी० २१। प० २५। मा० १८) २० ( कै। ५४८ )

(२२३।४)

अवद्रप्साअꣳशुमतीम्। एऽ३। औऽ३होऽ५वाऽ॥ आताऽ२३४५इष्ठाऽ६५६त्।
ईयानः कृष्णोदशभिस्सहस्रः॥ आवत्तम्। आऽइ। द्राऽ३ःशचि। याधमंताम्॥
अपस्नीहितिंनृमणाः। औवा॥ अधद्राऽ२आऽ२३४५॥ (दी० ९। प० १२। मा० १०) २१ ( धौ। ५४९ )

---

[ साम-तन्त्र-सूत्राणि ] [५४६] १८ नञ ११ ३.३; [५४७] १९ [५४८] २० ( पृथग् सूत्राणि न सन्ति )
[५४९] २१ उधार् इत्येते ८.१०; नौ ५.९.४;

तिरश्चीराङ्गिरसो, द्युतानो वा मारुत । इन्द्र । त्रिष्टुप् ( ऋ० ८।९६।७ )

वृत्रस्य त्वा श्वसथादीषमाणा विश्वे देवा अजहुर्ये सखायः ।

मरुद्भिरिन्द्र सख्यं ते अस्त्वथेमा विश्वाः पृतना जयासि ॥ ३२४ ॥

बृहदुक्थो वामदेव्य । इन्द्र । त्रिष्टुप । ( ऋ० १०।५५।५ )

विधुं दद्राणं समने बहूनां युवानं सन्तं पलितो जगार ।

देवस्य पश्य काव्यं महित्वाद्या ममार स ह्यः समान ॥ ३२५ ॥

वृत्रस्य त्वा श्वसथादीषमाणा विश्वे देवा अजहुर्ये सखायः ।

मरुद्भिरिन्द्र सख्यं ते अस्त्वथेमा विश्वाः पृतना जयासि ॥ ३२४ ॥

विधुं दद्राण९ समने बहूनां युवान९ सन्तंपलितो जगार ।

देवस्य पश्य काव्यं महित्वाद्या ममार स ह्यः समान । ३२५॥

(३२४।१) द्यौतानि, धुवतो मारुतस्य सामनी वा द्वे । द्युतानस्त्रिष्टुबिन्द्रः ॥

हाऽ३ । ओऽ३हाऽ३ । ओऽ३हाऽ३ । हाइ । वृत्रस्यत्वा । श्वसथात् । ईषमाणाः ॥
विश्वेदेवाः । अजहूऽ३ः । येसखायाः ॥ मरुद्भिराइ । द्राऽ३सखि । यन्तेअस्तू ॥
अथेमावाइ । श्वाऽ३ःपृत । नाजयासी । हाऽ३ । ओऽ३हाऽ३ । ओऽ३हाऽ३ । हाऽ३४ ।
औहोवा ॥ आऔऽ३होऽ२३४५ ॥

( दी० ८ । प० २२ । मा० १० )१६( ठौ । ५५० )

(३२४।२ )

होयेऽ३ । हयायेऽ३ । हया । औहोऽ२३४ आ । हाऽ३ । वृत्रस्यत्वा । श्वसथात् ।
ईषमाणाः ॥ विश्वेदेवाः । अजहूऽ३ः । येसखायाः ॥ मरुद्भिराइ । द्राऽ३सखि ।
यन्तेअस्तू ॥ अथेमावाइ । श्वाऽ३ः पृत । नाजयासी । होयेऽ३ । हयायेऽ३ । हया ।
औहोऽ२३४वा । हाऽ३४ । औहोवा ॥ आऔऽ३हो । आऔऽ३होऽ२३४५ ॥

( दी० १० । प० २५ । मा० ११ )२३( म । ५५१ )

(३२५।१) ॥ सोमसामनी द्वे । द्वयोः सोमस्त्रिष्टुबिन्द्रः ( सूर्यो वा )॥

वीधूम् । दद्राद्द्रा । णाऽ३९मम । नाइबहूनाम् ॥ यूना । न९सान९सा ।
ताऽ३०पलि । तोजगारा ॥ देवा । स्यपास्यपा । श्याऽ३काधि । यंमहित्वा ॥
आद्या । ममाममा । राऽ३सहि । याऽ३४३ः । साऽ३माऽ५नाऽ६५६ ॥

( दी० ११ । प० १७ । मा० ४ )२४ ( खी । ५५२ )

[साम-तन्त्र-सूत्राणि] [५५०]२२ द्यौतिद्यात० ३ १०.१०, [५५१]२३ [५५२]२४ ( पृथक सूत्राणि न सन्ति )

तिरश्चीराङ्गिरसो, श्रुत नो वा मारुतः । इन्द्र । त्रिष्टुप् । ( ऋ० ८ । ९६ । १६ )

* त्वं ह त्यत्सप्तभ्यो जायमानोऽशत्रुभ्यो अभवः शत्रुरिन्द्र ।
गूळ्हे द्यावापृथिवी अन्वविन्दो विभुमद्भ्यो भुवनेभ्यो रणं धाः ॥ ३२६ ॥

२ ३ २ ३२ ३ १ २ ३१ २ ३ १२
त्व२ ह त्यत्सप्तभ्यो जायमानोऽशत्रुभ्यो अभवः शत्रुरिन्द्र ।
३१ २२ ३१ २र ३ २ ३ १२ ३ १२
गूढे द्यावापृथिवी अन्वविन्दो विभुमद्भ्यो भुवनेभ्यो रणं धाः॥३२६॥

---

(३२५।२)

हु२ऽ४ । आऽ४५ । हु२ । हु२ऽ२३४५ । विधुंदद्रा । णाऽ३१म । नाइबहूनाम् ॥
युवान२सा । ताऽ३०पलि । ताजगारा॥ देवस्यपा । श्याऽ२काबि । यमहित्वा ॥
हु२ऽ४ । आऽ४५ । हु२ । हु२ऽ२३४५ । अद्यामम । राऽ३सहि । याऽ३४३: ।
साऽ२माऽ५नाऽ६५६ ॥ ( ई० ४ । प० २१ । मा० ३ )२५ ( ति । ५५३ )

३२६।१) ॥ इन्द्रयज्ञे द्वे । इन्द्रस्त्रिष्टुविन्द्रः ॥

(

औहोइतुराम् । हत्यत्सप्तभ्योजायमानाऽ२३४: ॥ औहोअशा । त्रुभ्योअभवःशत्रुरिन्द्राऽ२३४ ॥
औहोइगूढे । द्यावापृथिवीअन्वविन्दाऽ२३४: ॥ औहोइविभू । मद्भ्योभुवनेभ्योरणंधाऽ२३४५: ॥
( दी० ११ । प० ८ । मा० १० )२६ ( दौ । ५५४)

(३२६।२)

त्वोंहाइ । हत्योवाओऽ२३४वा । सप्तभ्योजायमा । नोवाऽ३ । ओवाऽ२३४५ ॥
अशोंहाइ । त्रुभ्योवाओऽ२३४वा । अभवःशत्रुरि । न्द्रोवाऽ३ । ओवाऽ२३४५ ॥ गूढोंहाइ ।
द्यावाओऽ२३४वा । पृथिवीअन्ववि । दोवाऽ३ । ओवाऽ२३४५ ॥ विभोंहाइ ।
मद्भ्यावाओऽ२३४वा । भुवने । भ्योवाऽ३ । ओवाऽ२३४५ । रणाऽ५०धाः । होऽ५इ ॥डा॥

( दी० ६ । प० २३ । मा० ११ )२७( ग । ५५५ )

---

[साम-तन्त्र-सूत्राणि ][५५३]२५ तृतीयो हि ४ १ १, [५५४]२६ विरतेन स्वराणाम् १ २ ८, विनीभि ३ ३ ५
३ ३ ३ ६ १, [५५५]२७ आरागम् १.६ २, रणं धेने ३ १ ४, द्यावा चतुर्थ ५.१ ४, माधरवान् ९ ३ १०,

वसिष्ठो मैत्रावरुणिः । इन्द्रः । त्रिष्टुप् ( विराट् ) ( ऋ० ७।३१।१० )

प्र वो महे महिवृधे भरध्वं प्रचेतसे प्र सुमतिं कृणुध्वम् ।
विशः पूर्वीः प्र चरा चर्षणिप्राः ॥ ३२८ ॥

वामदेवो गौतम । इन्द्रः । त्रिष्टुप् । ( न ऋग्वदे य )

मंहिं न त्वा वज्रिणं भृष्टिमन्तं पुरुधस्मानं वृषभ स्थिरप्स्नुम् ।
करोष्यर्यस्तरुषीर्दुवस्युरिन्द्र द्युक्षं वृत्रहणं गृणीषे ॥३२७॥
प्र वो महे महे वृधे भरध्वं प्रचेतसे प्र सुमतिं कृणुध्वम् ।
विशः पूर्वीः प्र चर चर्षणिप्राः ॥ ३२८ ॥

(३२७।१) ॥ ऋषिप्रमाणपदगणिते अर्द्धेयेयः । सूर्यवर्चसो भृष्टिमतः सामनी द्वे । भृष्टिमात्रिष्टुबिन्द्र ॥
मंडीम् ॥ नत्वावज्रिणंभृष्टिमाऽ२३०ताम् । पुरुधस्मानंवृषभ२स्थिराऽ२३प्स्नूम् ।
करोष्यर्यस्तरुषाइर्दुवाऽ२३स्यूः ॥ आइन्द्रद्युक्षम् ॥ वृत्राऽ२३ । हाऽ२णाऽ२३४औहोवा ॥
गृणीऽ३४२३४५ ॥　　　　　　( दी० ५। प० ८। मा० ८)२८ ( वै । ५५६ )

(३२७।२)
मंडिन्नत्वा ॥ वाऽ३४औहो । जाइ । णंभार्ष्टाइमी । वाऽ३२३४ । ताम् । पुराऽ३४औहो ।
धस्मानंवृ । षभ२स्थाइरौ । वाऽ३२३४ । प्स्नुम् ॥ कराऽ३४औहो । षिअर्यस्त ।
रुषाइर्दुवौ । वाऽ३२३४ ॥ स्यूः । इंद्राऽ३४औहो । द्युक्षम् । वृत्राऽ२३ । हाऽ२णाऽ२३४औहोवा ॥
गृणीषेऽ२३४५ ॥　　　　　　( दी० ५। प० २१। मा० १४ )२९ ( पी । ५५७ )

(३२८।१)　　　　॥ अकुशौ द्वौ (वसिष्ठौ) । वसिष्ठस्त्रिष्टुबिन्द्रः॥
प्रवाः ॥ माहेमहेवृधे । भराधूऽ३वाम् । प्रचाइतसाई । प्राइमाऽ२३४तीम् ॥ कृणुध्वम् ।
इहाऽ२वाऽ२३४इशाः ॥ पूऽ२३र्वीः । प्रचा । राऽ२३चा । पणाइ । प्रा । औऽ३होवा ।
होऽ५इ ॥डा॥　　　　　　( दी० ३। प० ११। मा० ११ )३०( पा । ५५८ )

(३२८।२)
इ१ऽ२३४५ । प्रवोमहाइमाऽ२३४हे । वृधाऽ३४३इ । भराऽ२३४ध्वाम् ॥ इ१ऽ२३४५ ।
प्रचेतासाइप्राऽ२३४सु । मताऽ३४३इम् । कृणूऽ२३४ध्वाम् ॥ इ१ऽ२३४५ ।
विशःपूर्वाइःप्राऽ२३४चा । रचाऽ३४३ । पणाऽ२३४इप्राः ॥ इ१ऽ२३४५ । हाउहोहोवाऽ६ ।
हाउवा ॥ ईऽ२३४५ ॥　　　　　　( दा० ५। प० १६। मा० १२ )३१( प्रा । ५५९ )

[ साम-तन्त्र-सूत्राणि] [५५६]२८ [५५९]३१ ( पृथक् सूत्राणि न सन्ति )　　　　[५५७]२९ वृधता ष २,३ ७,
[५५८]३० प्वाजु ७ ३ ९,

विश्वामित्रो गाथिन । इन्द्र । त्रिष्टुप् । ( ऋ० ३ । ३० । २२ )

शुनं हुवेम मघवानमिन्द्रमस्मिन्भरे नृतमं वाजसातौ ।
शृण्वन्तमुग्रमूतये समत्सु घ्नन्तं वृत्राणि संजितं धनानाम् ॥ ३२९ ॥

वसिष्ठो मैत्रावरुणि । इन्द्र । त्रिष्टुप् । ( ऋ० ७ । २३ । १ )

उदु ब्रह्माण्यैरत श्रवस्येन्द्रं समर्ये महया वसिष्ठ ।
आ यो विश्वानि शवसा ततानोपश्रोता म ईवतो वचांसि ॥३३०॥

गौरिवीतिः शाक्त्य । इन्द्रः । त्रिष्टुप् । ( ऋ० १० । ७३ । ९ )

चक्रं यदस्याप्स्वा निषत्तमुतो तदस्मै मध्विच्चच्छद्यात् ।
पृथिव्यामतिषितं यदूधः पयो गोष्वदधा ओषधीषु ॥ ३३१ ॥

शुनꣳ हुवेम मघवानमिन्द्रमस्मिन्भरे नृतमं वाजसातौ ।
शृण्वन्तमुग्रमूतये समत्सु घ्नन्तं वृत्राणि संजितं धनानि ॥३२९॥
उदु ब्रह्माण्यैरत श्रवस्येन्द्रꣳ समर्ये महया वसिष्ठ ।
आ यो विश्वानि श्रवसा ततानोपश्रोता म ईवतो वचाꣳसि ॥३३०॥
चक्रं यदस्याप्स्वा निषत्तमुतो तदस्मै मध्विच्चच्छद्यात् ।
पृथिव्यामतिषितं यदूधः पयो गोष्वदधा ओषधीषु ॥३३१॥

---

(३२९।१) ॥ भारद्वाजम् । भरद्वाजस्त्रिष्टुबिन्द्रः ॥

शुनꣳहुवेममघवानमिन्द्राम् ॥ अस्मिन्भरेनृतमंवाजसा२३ताउ । शृण्वन्तमुग्रमूतयेसमा२३त्सु ॥ घ्न । तंवा२३त्रा२ । होवा३हा ॥ णिसंजितम् । धना२३नी३ । होवा३हा३४३इ । ओ२३४५इ ॥डा॥ ( दी० ६ । प० ११ । मा० ५ )३१( क्रु । ५६० )

(३३०।१) ॥ वैश्वदेवम् । विश्वेदेवास्त्रिष्टुबिन्द्रः ॥

दिवया । ओवा । औ३होऽ३वा । उदुब्रह्मा । णी२ऐर । तश्रवस्या ॥ इन्द्रꣳसमा । र्ये३महः । यावसिष्ठा ॥ आयोविश्वा । नी२श्रव । सातताना ॥ दिवया । ओवा । औ३होऽ३वा । उपश्रोता । मईव । तो३४३ । वा३चा६ꣳसा६५६इ ॥ ( दी० ७ । प० १९ । मा० ३ )३३ ( गि । ५६१ )

(३३१।१) ॥ पुरीषम् । अथर्वा त्रिष्टुबिन्द्रः ॥

चक्रंयदस्याप्सुवानिषत्ताम् ॥ उतोतदस्मैमध्विचछा२३द्यात् । पृथिव्यामतिषितंयदू२३धाः ॥ पयोगो२३ष्वू । आदधाओषधीषु । इडा२३मा३४३ । ओ२३४५इ ॥डा॥ ( दी० ९ । प० ८ । मा० ५ )३४( द्रु । ५६२ )

गानेषु द्वितीय, दशम गाने ॥ १० ॥ दशति ॥ ८ ॥
इति ग्रामे गेयगानेऽष्टमः प्रपाठकः ॥ ८ ॥

---

[साम-तन्त्र-सूत्राणि ] [५६०]३० [५६१]३३ [५६२]३४ (पृथक् सूत्राणि न सन्ति )

अरिष्टनेमिस्तार्क्ष्यः । तार्क्ष्यः । त्रिष्टुप् । ( ऋ० १० । १७८ । १ )

त्यमू षु वाजिनं देवजूतं सहावानं तरुतारं रथानाम् ।
अरिष्टनेमिं पृतनाजमाशुं स्वस्तये तार्क्ष्यमिहा हुवेम ॥ ३३२ ॥

गर्गो भारद्वाजः । इन्द्रः । त्रिष्टुप् । ( ऋ० ६ । ४७ । ११ )

त्रातारमिन्द्रमवितारमिन्द्रं हवेहवे सुहवं शूरमिन्द्रम् ।
ह्वयामि शक्रं पुरुहूतमिन्द्रं स्वस्ति नो मघवा धात्विन्द्रः ॥ ३३३ ॥

त्यमू षु वाजिनं देवजूत२ँ सहोवानं तरुतार२ँ रथानाम् ।
अरिष्टनेमिं पृतनाजमाशु२ँ स्वस्तये तार्क्ष्यमिहा हुवेम ॥ ३३२ ॥
त्रातारमिन्द्रमवितारमिन्द्र२ँ हवेहवे सुहव२ँ शूरमिन्द्रम् ।
हुवे नु शक्रं पुरुहूतमिन्द्रमिद२ँ हविर्मघवा वेत्विन्द्रः ॥ ३३३ ॥

---

(३३२।१)        ॥ तार्क्ष्यसामनी द्वे । तार्क्ष्यस्त्रिष्टुबिन्द्रः ( तार्क्ष्यो वा ) ॥

त्यमूषू ॥ वाजि । नाऽ२३४५म् । देवजूताऽ२३४म् । सहोवानता । रुताऽ३ । र२ँरथानाम् ।
अरिष्टनाऽ२३४इमीम् । पृतनाऽ३४३जमाशुम् ॥ स्वस्त । याइ ॥ तार्क्ष्यमिहाऽ३४३ ।
हूऽ२वाऽ५ईमाऽ६५६ ॥        ( दी० ८ । प० १३ । मा० ८ )१( डै । ५६३ )

(३३२।२)

ईयइयाऽ३हाइ । त्यमूपुवाजिनाऽ३०दैऽ३वजूतम् ॥ ईऽ४यइया । हाऽ२३४इ । सहोवानता ।
रुताऽ३ । र२ँरथानाम् ॥ इयइयाऽ३हाइ । अरिष्टऽ३ । नाइ । मीऽ३०पृत ।
नाजमाशुम् ॥ ईऽ४यइया । हाऽ२३४५इ । स्वस्त । याइ । तार्क्ष्यमिहाऽ३४३ ।
हूऽ२वाऽ५ईमाऽ६५६ ॥        ( दी० १० । प० १६ । मा० १४ )२( चौ । ५६४ )

(३३३।१)        ॥ इन्द्रस्य त्रातम् । इन्द्रस्त्रिष्टुबिन्द्रः ॥

त्रातारमिन्द्रमविता । रमीऽ२३०द्राम् ॥ हवेहवेसुहव२ँशू । रमीऽ२३०द्राम् ॥
हुवाइनुशक्रंपुरुहू । तमीऽ२३०द्राम् ॥ इद२ँह । वाइः । मघवा । वाऽ३४३इ ।
तूऽ२वाऽ५इन्द्राऽ६५६ः॥        ( दी० ५ । प० ११ । मा० ६ )३( पो । ५६५ )

---

[साम-तन्त्र-सूत्राणि] [५६३]१ स्वारान् १.४ ७,तृतीये ९ ३ ६,        [५६४]२ ए रि २ ५ १,अवृद्धयो ८ १ १०,
य हि ८ ४ १, अन्तस्थि यरे ६ ७ ८,        [५६५]३ चोदेऽस्ये १२ ८ १,

विमद ऐन्द्र, प्राजापत्यो वा, वसुकृद्वा वासुक्र । इन्द्र । त्रिष्टुप् । ( ऋ० १० । २३ । १ )

यजामह इन्द्रं वज्रदक्षिणं हरीणां रथ्यं॑ विव्रतानाम् ।
प्र श्मश्रु दोधुवदूर्ध्वथा भूद्वि सेनाभिर्दयमानो वि राधसा ॥ ३३४ ॥

वामदेवो गौतम. । इन्द्र । त्रिष्टुप् । ( ऋ० ४ । १७ । ८ )

सत्राहणं दाधृषिं तुम्रमिन्द्रं महामपारं वृषभं सुवज्रम् ।
हन्ता यो वृत्रं सनितोत वाजं दाता मघानि मघवा सुराधाः ॥३३५॥

यजामह इन्द्रं वज्रदक्षिणं हरीणा१ रथ्य३विव्रतानाम् ।
प्र श्मश्रुभिर्दोधुवदूर्ध्वधा भुवद्वि सेनाभिर्भयमानो वि राधसा ॥ ३३४ ॥
सत्राहणं दाधृषि तुम्रमिन्द्रं महामपारं वृषभ१ सुवज्रम् ।
हन्ता यो वृत्र१ सनितोत वाजं दाता मघानि मघवा सुराधाः ॥ ३३५ ॥

(३३४।१) ॥ यार्मातुरम् । वृत्रतुरस्त्रिष्टुबिन्द्रः ॥

यजामहौवा ॥ आइन्द्रंवज्र । दक्षाऽ२३इणाम् । हरीणा१रथ्यंवि । व्रताऽ२३नाम् ।
प्रश्मश्रुभिर्दोधुवत् । ऊऽ । र्ध्वाथाभूऽ२३४वात् ॥ विसाइ । नाऽ । भिर्भयमानाऽ२३ः ॥
वाऽ२३इराऽ३ । धाऽ२३४५सोऽ६हाइ ॥ ( दी० ८ । प० १३ । मा० १० )४ ( वी । ५६६ )

(३३५।१) ॥ मारुतस्य धृपतः सामनी द्वे । धृपतिस्त्रिष्टुबिन्द्र. ॥

सत्रा । हणाऽ२३४औहोवा ॥ दाधृर्षीत् । तुम्रमिन्द्राओऽ२३४वा । महामपारंवृषभ१सुवज्राऽ२३म् ॥
हन्ताऽ२योऽ२३४वृ ॥ त्रा१सनि । तोऽ२३४३ । ताऽ२वाऽ५जाऽ६५६म् ॥
दातामघानिमघवाऽ२सुराधाऽ२३४५ः ॥ ( दी० ११ । प० १० । मा० ५ )५( डु । ५६७ )

(३३५।२)
सत्राहणंदाधृषिम् । तुऽ२३४३०म्रमिन्द्रम् ॥ महामपारंवृषभ१सुवज्राऽ२३म् ॥
हन्तायोऽ२३४वृ ॥ त्रा१सनि । तोऽ२३४३ । ताऽ२वाऽ५जाऽ६५६म् ॥
दातामघानिमघवाऽ२सुराधाऽ२३४५ः ॥ ( दी० ९ । प० ८ । मा० ५ )६ ( डु । ५६८ )

[ साम-तन्त्र-सूत्राणि ] [५६६]४ द्वणो हत्तु नीचनाम् २ २ ७, [५६७]५ जिदीर्घ मन्द्राणी १ १.७, [५६८]६ ( पृथक् सूत्राणि न सन्ति )

वामदेवो गौतम । इन्द्र । त्रिष्टुप । (न ऋग्वेदीय)

यो नो वनुष्यन्नभिदाति मर्त उगणा वा मन्यमानस्तुरो वा ।
क्षिधी युधा शवसा वा तमिन्द्राभी ष्याम वृषमणस्त्वोताः ॥३३६॥

वामदेवो गौतम । इन्द्र । त्रिष्टुप । (न ऋग्वेदीय)

यं वृत्रेषु क्षितय स्पर्धमाना यं युक्तेषु तुरयन्तो हवन्ते ।
यꣳ शूरसातौ यमपामुपज्मन्विप्रासो वाजयन्ते स इन्द्रः ॥३३७॥

(३३६।१) ॥ आत्रम् । आत्रिस्त्रिष्टुबिन्द्रः ॥

यानोवनुष्यन्नभिदा । तिमाऽ२२३४र्ताः॥ उगणावामन्यमानस्तुरोऽ२३वा ।
क्षिधीयुधाशवसावातमाऽ२३इन्द्रा ॥ अभाइष्याऽ३मा ॥ वृषामाऽ३णाऽ३ः ।
त्वोऽ२३ताऽ३४३ः । ओऽ२३४५ई ॥ डा ॥ (दी० १० । प० ९ । मा० ६)७ (भू । ५६९)

(३३७।१) ॥ गृत्समदस्य मदो द्वौ गार्त्समदे वा द्वे । गृत्समदस्त्रिष्टुबिन्द्रः ॥

हाउयंवृत्रेषू । क्षितयाऽ२ः । स्पर्द्धमानाः । धमानाऽ२ः । ईऽ२३४यइया ॥
हाउयंयुक्तेषू । तुरयऽ२ । तोहवन्ताइ । हवन्ताऽ२इ । इऽ२३४यइया ॥
हाउयꣳशूरसा । ताऽ२उयम । पामुपज्मान् । उपज्माऽ२न् । ईऽ२३४यइया ॥
हाउयंविप्रासाः । वाऽ२जय । ताइसइन्द्राः । सइन्द्राऽ३ः । ईऽ२३४य । इयाऽ६ ।
हाउवा ॥ ईऽ२३४५ ॥ (दी० १२ । प० २३ । मा० ११)८ (ज्रा । ५७०)

(३३७।२)

यंयंया । हाउयंवृत्रेषू । क्षितयाऽ२ः । स्पर्द्धमानाः । धमानाः । यंयंयंऽ२०याम् ॥
यंयंया । हाउयंयुक्तेषू । तुरयऽ२ । तोहवंताइ । हवन्त । यंयंयंऽ२०याम् ॥
यंयंया । हाउयꣳशूरसा । ताऽ२उयम । पामुपज्मान् । उपज्मन् । यंयंयंऽ२०याम् ॥
यंयंया । हाउयंविप्रासाः । वाऽ२जय । ताइसइन्द्राः । सइन्द्रः। यंयंयंऽ२०याम् ।
यंयंयाऽ६ । हाउवा ॥ ईऽ२३४५ ॥ (दी० १० । प० २१ । मा० १२)९ (फ्रा । ५७१)

[साम-तन्त्र-सूत्राणि] [५६९]७ = ८१०८, [५७०]८ स्वारतयन्‌ ३१६, [५७१]९ य णत्य ३७९,

❀

विश्वामित्रो गाथिन । इन्द्रापर्वतौ । त्रिष्टुप् । ( ऋ० ३ । ५३ । १ )

इन्द्रापर्वता बृहता रथेन वामीरिष आ वहतं सुवीराः ।
वीतं हव्यान्यध्वरेषु देवा वर्धेथां गीर्भिरिळया मदन्ता ॥ ३३८ ॥

रेणुर्वैश्वामित्र । इन्द्र । त्रिष्टुप् । ( ऋ० १० । ८९ । ४ )

इन्द्राय गिरो अनिशितसर्गा अपः प्रेरयं सगरस्य बुध्नात् ।
यो अक्षेणेव चक्रिया शचीभिर्विष्वक्तस्तम्भ पृथिवीमुत द्याम् ॥ ३३९ ॥

इन्द्रापर्वता बृहता रथेन वामीरिष आ वहत२ँ सुवीराः ।
वीत२ँ हव्यान्यध्वरेषु देवा वर्धेथां गीर्भिरिडया मदन्ता ॥ ३३८ ॥

इन्द्राय गिरो अनिशितसर्गा अपः प्रैरयत्सगरस्य बुध्नात् ।
यो अक्षेणेव चक्रियौ शचीभिर्विष्वक्तस्तंभ पृथिवीमुत द्याम् ॥ ३३९ ॥

---

(३३८।१)　॥ वैश्वामित्रम् । विश्वामित्रस्त्रिष्टुबिन्द्रः ( इन्द्रापर्वतौ वा ) ॥

इन्द्राहाउ । हाहोइ । पर्वताबृहतारथाऽ२इनाऽ२उवाऽ३ । ऊऽ३४पा ॥ वामीहाउ ।
हाहोइ । इषआवहत२ँसुवाऽ२इराऽ२उवाऽ३ । ऊऽ३४पा ॥ वीत२ँहाउ । हाहोइ ।
हव्यान्यध्वरेषुदाऽ२इवाऽ२उवाऽ३ । ऊऽ३४पा ॥ वर्द्धाहाउ । हाहो ।
थांगीर्भिरिडयामदाऽ२०ताऽ२उवाऽ३ ॥ ऊऽ३२३४पा ॥ ( दी० १४ । प० १६ । मा० १५ ) १० ( त्लु । ५७२ )

(३३९।१)　॥ सावित्राणि पद्सामानि (सवित्रम्) । षण्णां सविता त्रिष्टुबिन्द्रः ॥

हाऽ३ । हाइ । इन्द्रायगाइ । राऽ२अनि । शीतसर्गाः ।१। अमाउ । असाउ ।
इन्द्रायगाइ । राऽ२अनि । शीतसर्गाः ।२। कुना । कुना । इन्द्रायगाइ । राऽ२अनि ।
शीतसर्गाः ।३। अयाम् । अयाम् । अपःप्रैरा । याऽ२त्सग । रस्यबुध्नात् ।४। अविदाऽ३त् ।
अविदत् । योअक्षेणाइ । वाऽ२चक्रि । यौशचीभीः ।५। इहाऽ२३ । ईऽ३४हा ।
विष्वक्तस्ता । भाऽ२पृथि । वीऽ२४३म् । ऊऽ२ताऽ५द्याऽ६५६म् ॥

( एव षट् सामानि- ) ( दी० ६ । प० ३१ । म० २२ ) ११ ( का । ५७३ )

---

[ साम-तन्त्र-सूत्राणि ][५७२]१० था ११.७ ३,　　[५७३]११ तिबु पु ७ ६ ३;

यमी वैवस्वती । यमो वैवस्वत । त्रिष्टुप् । ( ऋ० १० । १० । १ )

ओ चित्सखायं सख्या ववृत्यां तिरः पुरू चिदर्णवं जगन्वान् ।
पितुर्नपातमा दधीत वेधा अधि क्षमि प्रतरं दीध्यानः ॥ ३४० ॥

गोतमो राहूगण । इन्द्र । त्रिष्टुप् । ( ऋ० १ । ८४ । १६ )

को अद्य युङ्क्ते धुरि गा ऋतस्य शिमीवतो भामिनो दुर्हृणायून् ।
आसन्निषून्हृत्स्वसो मयोभून्य एषां भृत्यामृणधत्स जीवात् ॥ ३४१ ॥

मधुच्छन्दा वैश्वामित्र । इन्द्र । अनुष्टुप् । ( ऋ० १ । १० । १ )

गायन्ति त्वा गायत्रिणोऽर्चन्त्यर्कमर्किणः । ब्रह्माणस्त्वा शतक्रत उद्वंशमिव येमिरे ॥ ३४२ ॥

आ त्वा सखायः सख्या ववृत्युस्तिरः पुरु चिदर्णवां जगम्याः ।
पितुर्नपातमा दधीत वेधा अस्मिन्क्षये प्रतरां दीद्यानः ॥ ३४० ॥
को अद्य युङ्क्ते धुरि गा ऋतस्य शिमीवतो भामिनो दुर्हृणायून् ।
आसन्नेषामप्सुवाहो मयोभून्य एषां भृत्यामृणधत्स जीवात् ॥ ३४१ ॥
गायन्ति त्वा गायत्रिणोऽर्चन्त्यर्कमर्किणः ।
ब्रह्माणस्त्वा शतक्रत उद्वंशमिव येमिरे ॥ ३४२ ॥

---

(३४०।१) ॥ कुलीपाद वैरूपस्य साम । विरूपस्त्रिष्टुविन्द्र. ॥
आत्वासखायःसख्याववृत्यूः ॥ तिरःपुरूचिदर्णवांजगाऽ२म्यौ । हौहोऽ३वा ।
पितुर्नपातमादधीतवाऽ२इधौ । हौहोऽ३वा॥ अस्मिन्क्षयेप्रतरांदीदियाऽ२नौ ।
हौहोऽ३वा । औहोऽ२॥ इहाऽ२३४५ ॥ ( दी० १६ । प० ६ । मा० १२ )१२ ( धा । ५७४ )

(३४१।१) ॥ आमहीयवम् । अमहीयुस्त्रिष्टुविन्द्र. ॥
कोअद्ययुङ्क्तेधुरिगाऽऋतस्याऽ६ए॥ शिमीवतोभामिनोदुर्हृणाऽ२३यून् ॥
आसन्नेषामप्सुवाहोमयोऽ२३भून् ॥ यएषांभृत्यामृणधत्सजाइवाऽ२उवा३॥ ऊऽ२३४पा ॥
( दी० १५ । प० ५ । मा० ८ )१३ ( क्यै । ५७५ )

॥ त्रयोदश तृतीय , एकादश खण्ड ॥ ११ ॥ दशति ॥५॥
॥ इति त्रैष्टुभम् ॥

(३४२।१) ॥ शैखण्डिने द्वे । द्वयोः शिखण्ड्यनुष्टुविन्द्र. ॥
गायाऽ३१ । तित्वाऽ३१२३४ । गाय । त्राऽ३इणाः॥ अर्चाऽ३१ । तियाऽ३१२३४ ।
कम । काऽ३इणाः॥ ब्रह्माऽ३१ । णस्त्वाऽ३१२३४ । शत । क्राऽ३ताऽ३॥ उद्वाऽ३१ ।
शमाऽ३१२३इ । वयाऽ५इमिराइ । होऽ५इ ॥डा॥ ( दी० २ । प० १७ । मा० ९ )१४ ( छो । ५७६)×

---

[ साम-तन्त्र-सूत्राणि ][५७४]१२ न उद्ववति ९ । १०,    [५७५] १३ ( पृथक् सूत्राणि न [illegible]न्ति )
[५७६]१४ पृणाम् ४ ६ ९, उद्वि १० १ ९,    × ( विप तालिन । २८ ० इद समत त्रमाष्यरात्रा अत्र निर्दिष्टम् । )

जेता माधुच्छन्दस । इन्द्र । अनुष्टुप् । (ऋ० १।११।१)

इन्द्रं विश्वा अवीवृधन्त्समुद्रव्यचसं गिरः ।
रथीतमं रथीनां वाजानां सत्पतिं पतिम् ॥ ३४३ ॥

इन्द्रं विश्वा अवीवृधन्त्समुद्रव्यचसं गिरः ।
रथीतमꣳ रथीनां वाजानाꣳसत्पतिं पतिम् ॥ ३४३ ॥

(३४२।२)

गायन्तित्वोहाइ ॥ गायाꣳत्रीऽ२३४णाः । अर्चन्त्यर्कमाऽ१र्कीऽ३णाः ।
अर्चन्तियोऽ२३४हा । कमार्कीऽ२३४णाः ॥ ब्रह्माणस्त्वाशताऽ१क्राऽ२ताः ।
ब्रह्माणस्त्वोऽ२३४हाइ ॥ शताक्राऽ२३४ताउ । उद्वꣳशमिवयाऽ१इमीऽ२रे ।
उद्वꣳशमोऽ२३४हाइ । वयाऽ३इमाऽ५इराऽ६५६इ ॥ ( दी० ५ । प० ११ । मा० ११)१५( प । ५७७)

(३४२।३) ॥ औद्वꣳशीयम् । उद्वꣳशीयम् । विश्वेदेवानुष्टुबिन्द्रः ॥

गायन्तित्वागायत्रिणआ ॥ अर्चन्त्यर्कमर्काऽ२३इणाः । ब्रह्माणस्त्वाऽ२होऽ१इ ।
शतक्राऽ२३ताउ । उद्वꣳशमिवयाऽ१इमीऽ२रे ॥ उद्वꣳशाऽ२३४मी ॥ वायाऽ३२उवाऽ३ ।
उप् । माऽ२इरोऽ३५हाइ ॥ ( दी० ४ । प० ९ । मा० १० )१६ ( धौ । ५७८ )

(३४३।१) ॥ शैखण्डिनानि त्रीणि । त्रयाणां शिखण्ड्यनुष्टुबिन्द्रः ॥

इन्द्रंविश्वाः ॥ आवीऽ२वृधान् । सामुद्रव्या । चासंगिराः । राथीतमाऽ२१उवाऽ२ ।
रथाइनाऽ२म् ॥ वाजानाऽ२३ꣳसात् ॥ पातिंपतिम् । इडाऽ२३माऽ३४३ । ओऽ२३४५इ ॥ डा ॥
( दी० ३ । प० ११ । मा० ९ ) १७( ठो । ५७९ )

(३४३।२)

ओइन्द्रंविश्वाः ॥ अवी । वृधान् । साऽ१मूऽ२द्राव्याऽ२ । चसम् । गिराः ॥
राऽ१थीऽ२तामाऽ२म् । रथी । नाम् । वाजाऽ२नाꣳमाऽ२त् ॥ पतिंपाऽ२३तीऽ३४३म् ।
ओऽ२३४५इ ॥ डा ॥ ( दी० २ । प० १३ । मा० १० )१८ ( जौ । ५८० )

[ साम-तन्त्र-सूत्राणि ] [५७७]१५ [५७८]१६ [५८०]१८( पृथक् सूत्राणि न सन्ति )
[५७९]१७ यम४ • १०,

(३४३।३)
इन्द्रंविश्वाअवीवृधन् । समूद्राऽ२३४व्या॥ चाऽ२सांगीऽ२राः । राथीतमाऽ२म् ।
ऊऽ२ । हाऽ२इ । ऊऽ२ । रथाइनाम्॥ वाजानाऽ२स्साऽ२ । ऊऽ२ । हाऽ२इ । ऊऽ२ ॥
पतिंपाऽ२३तीऽ२३४३म् । ओऽ२३४५इ ॥ डा ॥ (दी० ५। प० १५। मा० १०)१९( मौ । ५८१ )

(३४३।४) ॥ आष्टाद्रंष्ट्रे द्वे । द्वयोरष्टादंष्ट्रोऽनुष्टुबिन्द्रः ॥
इन्द्रंविश्वाअवीवृधन् । ऐयाहाइ॥ समूद्राऽ१व्याऽ२ । चसांगाऽ१इराऽ२३ः ।
ऐयाऽ२३हाइ॥ रथाइताऽ१माऽ२म् । रथाइनाऽ२३म् । ऐयाऽ२३हाइ ॥
वाजानाऽ१स्साऽ२त् । पवाइंपाऽ१तीऽ२३म् । ऐयाऽ२३हाऽ३४३इ । ओऽ२३४५इ ॥ डा ॥
(३४३।५) ( दी० ६। प० १२। मा० १६ )२०( गू । ५८२ )
इन्द्रंविश्वाअवीवृधन्नियादो । होऽ२वा॥ समुद्रव्यचसम् । गाइराऽ२३ः । ऐयाऽ२३त् ।
औऽ२३होवा॥ रथाइतमं२र । थाइनाऽ२३म् । ऐयाऽ२३त् । औऽ२३होवा ॥
वाजानाऽ२सत्पतिम् । पातीऽ२३म् । ऐयाऽ२३त् । औऽ२३होवाऽ२४३ ।
ओऽ२३४५इ ॥डा॥ ( दी० १४। प० १६। मा०१३ )२१ ( ति । ५८३ )

(३४३।६) ॥ महावैश्वामित्रे द्वे । द्वयोः विश्वामित्रोऽनुष्टुबिन्द्रः ॥
हयाइ । हयाऽ३ । ओहाओहा । (त्रीणित्रिः )। इन्द्रंविश्वाः । अवीवाद्धोऽ२न्॥
समुद्रव्या । चसंगाइराऽ२ः॥ रथीतमम् । रथाइनाऽ२म्॥ वाजानाऽ२सात् ।
पतिंपातीऽ२म् । हयाइ । हयाऽ३ । ओहाओहा॥ (त्रीणित्रिः )। होऽ४इडा ।
होऽ४इडा । होऽ२३४५इ । डा ॥ ( दी० ५। प० ३०। मा० २४ )२२ (मी । ५८४ )

(३४३।७)
हयायेऽ३ । हयायेऽ३ । हयाऽ२३४५ । इऽ२२३ । आऽ२३४इ । द्रंविश्वाअवी ।
वृधाऽ३न् । साऽ२३४ । मुद्रव्यचसम् । गिराऽ३ः॥ राऽ२३४ । थीतमऽ२र्था ।
नाऽ३म्॥ वाऽ२३४ । जानाऽ२सत्पतिम् । पवाऽ३इम् । हयायेऽ३ । हयायेऽ३ ।
हयाऽ२३४५ । इ२२३४५॥ होऽ४इडा । होऽ४इडा। होऽ२३४५इ । डा ॥
( दी० ६। प० २४। मा० १२ )२३ ( घा । ५८५ )

---

[ साम-तन्त्र-सूत्राणि] [५८१]१९ तृतीयेऽन्त्यात् ५ ३.४; [५८२]२० इ भिनि पति ४.७ ३;
[५८३]२१ ( पृथक् सूत्राणि न सन्ति) [५८४]२२ त्रिद्विवत. पते ७ ६.५, घे प्रथमे ११.६.५; द्वसूत्वा ११ ८.१०;
[५८५]२३ देवा हि ४.४.१०,

गोतमो राहूगण । इन्द्र । अनुष्टुप् । ( ऋ० १।८४।४ )

इमर्मिन्द्र सुतं पिंब ज्येष्ठममर्त्यं मदम् ।
शुक्रस्यं त्वाभ्यक्षरन्धारां ऋतस्य सादने ॥ ३४४ ॥

इमभिन्द्र सुतं पिब ज्येष्ठममत्यं मदम् ।
शुक्रस्य त्वाभ्यक्षरन्धारा ऋतस्य सादने ॥ ३४४ ॥

(३४४।१) ॥ वसिष्ठस्य प्रियाणि चत्वारि । वसिष्ठोऽनुष्टुबिन्द्रः ॥

इममाऽ२३४इन्द्रा ॥ सुतम् । पाऽ२इयाऽ२३४औहोवा । ज्येष्ठममा॑ऽरर्तियंमदम् । शुक्रा ॥ स्यत्वाभिऽ३या ऽ२३ ॥ क्षाऽ२राऽ२३४औहोवा ॥ धाराऽ२ऋतस्यसादनेऽ२३४५ ॥

( दी० १० । प० ८ । मा० ७ )२४ ( घे । ५८६ )

(३४४।२) ॥ गौतमम् । गोतमोऽनुष्टुबिन्द्र ॥

इमभिन्द्रसुतपिबा ॥ ज्येष्ठाममा । तियमदाऽ२म् । शुक्रा । औहोऽ२३४वा । स्यत्वाभ्यक्षरन् ॥ धारा । औहोऽ२३४वा । ऋता । औहोऽ२३४वा ॥ स्यसाऽ५दनाइ । होऽ५इ ॥ डा ॥

( दी० ६ । प० १२ । मा० ४ ) २५ ( गी । ५८७ )

(३४४।३) ॥ वसिष्ठस्य प्रिये द्वे । द्वयोर्वसिष्ठोऽनुष्टुबिन्द्रः ॥

इममिन्द्राऽ६सुतंपिबा ॥ ज्येष्ठममऽ२र्त्तायमादाऽ२म् । औऽ२ । होऽ२ । हुवाइ । औऽ२होऽ२३४वा । शुक्रस्यत्वाऽ२भायक्षाराऽ२न् । औऽ२ । होऽ२ । हुवाइ । औऽ२होऽ२३४वा ॥ धाराऽ१ऋताऽ२ । औऽ२ । होऽ२ । हुवाइ । औऽ२होऽ२३४वा ॥ स्यसादाऽ२३नाऽ३४३३ । औऽ२३४५इ ॥ डा ॥

( दी० ३ । प० १६ । मा० ८ ) २६ ( दै । ५८८ )

(३४४।४) ॥ वसिष्ठस्यप्रियम् ॥

इममीऽ२३ । द्रसुतंपिब । ज्येष्ठाम् ॥ अमऽ२र्त्तायमादाऽ२म् । शुक्रास्यत्वाऽ३ । भियाऽ२क्षाऽ२३४रान् ॥ धाराओऽ२३४वा । आचाओऽ२३४वा ॥ स्यसाऽ४दनाइ । होऽ५इ ॥ डा ॥

( दी० नास्ति । प० ११ । मा० ७ )२७ ( हे । ५८९ )

[ साम-तन्त्र सूत्राणि ] [५८६]२४ मा. २४१ इ. १०१४, [५८७]२५ [५८८]२६ [५८९]२७
( पृथक् सूत्राणि न सन्ति )

अत्रिर्भौम. । इन्द्र । अनुष्टुप् । ( ऋ० ५।३९।१ )

यदि॑न्द्र चित्र मे॒हनास्ति॒ त्वादा॑तमद्रिवः ।
राध॒स्तन्नो॑ विदद्वस उभयाह॒स्त्या भ॑र ॥ ३४५ ॥

यदिन्द्र चित्र म इह नास्ति त्वादातमद्रिवः ।
राधस्तन्नो विदद्वस उभयाहस्त्या भर ॥ ३४५ ॥

---

(३४५।१) ॥ यौकानिचत्वारि, यौङ्के द्वे । द्वयोः गृत्समदोऽनुष्टुबिन्द्रः ॥

यदिन्द्रोहाइ ॥ चित्रमइहनाऽ२३ । आऽ२३४ । स्तित्वादा । हाऽ३इ । तमद्राइनाऽ२३ः ॥ राऽ२३४ । धस्तन्नोविदा । हाऽ३ । वाऽ । साउ ॥ उभयाहाऽ२३ ॥ स्तियाउवाऽ३४३ । भाऽ२३४५रोऽ६हाइ ॥

( दी० ४ । प० १४ । मा० ८ )२८ ( धै । ५९० )

(३४५।२)

यदिन्द्रचित्रमोहोवा ॥ हाऽ२३४ना । अस्तित्वादातमोवाऽ३ । ओवा । द्राऽ२३४इवाः । राधस्तन्नोविद्वोवाऽ३ । ओवा । वाऽ२३४साउ ॥ उभयाहस्तियोवाऽ३ । ओवाऽ३४३ । भाऽ२३४५रोऽ६हाइ ॥

( दी० ६ । प० ११ । मा० ४ )२९ ( की । ५९१ )

(३४५।३) ॥ आकूपारं आकूपारमनादेशं वा । आकूपारोऽनुष्टुबिन्द्रः ॥

यदिन्द्राऽ२३चित्र । मइहाऽ२३४ना ॥ अस्ताऽ२इत्वादा । तमद्राइवो । राधस्तान्नाऽ२ः । विदद्वसाउ ॥ उभयाहाऽ२३ ॥ स्ताऽ२३याऽ२ । भाऽ३४५रोऽ६हाइ ॥

( दी० २ । प० ९ । मा० ६ )३०( झू । ५९२ )

(३४५।४) ॥ यौक्रम् ॥

यदिन्द्रचित्रमइ । हनाऽ३ । आस्ती ॥ त्वादातमद्रिवः ॥ राधस्ताऽ२३न्नाः । वीवीऽ२ । दद्वसाउ ॥ उभयाऽ२३हा ॥ स्तायाऽ२३ । भाऽ२३राऽ३४३ । ओऽ२३४५इ ॥ डा ॥

( दी० ३ । प० १२ । मा० ५ )३१ ( टु । ५९३ )

॥ इति ग्रामे गेय-गान नवमस्यार्द्ध प्रपाठक ॥

---

[ साम-तन्त्र-सूत्राणि][५९०]२८ णीथ ६ ७ ३, रि तचे ८ ८ ४, अने वे रत ११ ४.१, अ॰रे ११.९ २, [५९१]२९ [५९२]३० ( पृथक् सूत्राणि न सन्ति ) [५९३]३१ राद्रि ८ ९ २,

तिरश्चीरस । इन्द्र । अनुष्टुप् । ( ऋ० ८।९५।४ )

श्रुधी हवं तिरश्च्या इन्द्र यस्त्वा सपर्यति ।
सुवीर्यस्य गोमतो रायस्पूर्धि महाँ असि ॥ ३४६ ॥

गोतमो राहूगण । इन्द्र । अनुष्टुप् । ( ऋ० १।८४।१ )

असावि सोम इन्द्र ते शविष्ठ धृष्णवा गहि ।
आ त्वा पृणक्त्विन्द्रियं रजः सूर्यो न रश्मिभिः ॥ ३४७ ॥

श्रुधी हव तिरश्च्या इन्द्र यस्त्वा सपर्यति ।
सुवीर्यस्य गोमतो रायस्पूर्धि महाऽ॒असि ॥ ३४६ ॥
असावि सोम इन्द्र ते शविष्ठ धृष्णवा गहि ।
आत्वा पृणक्त्विन्द्रिय॒ रजः सूर्यो न रश्मिभिः ॥ ३४७ ॥

---

(३४६।१) ॥ तैरश्चे द्वे । द्वयोः तिरश्च्यनुष्टुबिन्द्र ॥

श्रुधी॥ हावाऽ२॒हावाऽ२म् । तिराश्चियाः । इन्द्रयाऽ२३स्त्वा । सपाऽ३हा । यतीऽ३या ॥
सुवीर्यस्यगोमताः॥ रायास्पूऽ२३र्धी॥ महा॒ऽ२३ । असियाऽ२४३॥ ओऽ२३४५ इ॥ डा ॥
( दी० ३ । प० १२ । मा० ४ )१( ठी । ५९४ )

(३४६।२)
श्रुधीहाऽ३वतिरश्चियाः॥ इन्द्रायस्त्वा । सपर्यतायेऽ३४॥ सुवी । रिया ।
स्याऽ२३४गो । मताऽ२ ॥ रायास्पूर्द्धीऽ३। हाऽ३हाइ॥ महा॒ऽ६असीऽ। हाेऽ५इ॥ डा ॥
( दी० २ । प० १२ । मा० ५ )२ ( छु । ७९५ )

(३४७।१) ॥ महावैश्वामित्रम् । विश्वामित्रोऽनुष्टुबिन्द्रः सूर्यो वा ॥

असाविसोमइन्द्रते । शाविष्ठाऽ२३४धृ॥ ष्णोऽ३आगाऽ३ही॥ आत्वापृणाऽ२३हाऽ३ ।
क्तुईऽ२०द्राऽ२३४याम्॥ रजाः । सूयाराओऽ२३४वा॥ नराऽ५श्मिभीः॥ होऽ६इ॥ डा ॥
( दी० ४ । प० १० । मा० ८)३ ( नै । ५९६ )

---

[साम तन्त्र सूत्राणि] [५९४]१ (पृथक् सूत्राणि न सन्ति) [५९५]२ अत्र ६ २ ५
[५९६]३ विन प ५४५

नीपातिथि काण्व । इन्द्र । अनुष्टुप् । ( ऋ० ८।३४।१ )

एन्द्रं याहि हरिभिरुप कण्वस्य सुष्टुतिम् ।
दिवो अमुष्य शासतो दिवं यय दिवावसो ॥ ३४८ ॥

तिरश्चीर ङ्गिरस । इन्द्र । अनुष्टुप् ( ऋ० ८।९५।१ )

आ त्वा गिरो रथीरिवास्थुः सुतेषु गिर्वणः ।
अभि त्वा समनूषतेन्द्र वत्सं न मातरः ॥ ३४९ ॥

एन्द्र याहि हरिभिरुप कण्वस्य सुष्टुतिम् ।
दिवो अमुष्य शासतो दिवं यय दिवावसो ॥ ३४८ ॥
आ त्वा गिरो रथीरिवास्थुः सुतेषु गिर्वणः ।
अभि त्वा समनूषत गावो वत्सं न धेनवः ॥ ३४९ ॥

---

( ३४८।१ )　　　॥ काण्वे द्वे । द्वयो कण्वोऽनुष्टुबिन्द्र ॥

एन्द्राऽ२याहिहरिभाइः॥ उपाकण्वाऽ२ । स्यासुष्टूऽ२३४तीम्। दिवोअमूऽ२ ।
ष्याशासाऽ२३४ता॥ दाइवंययाऽ३१उवाऽ२३॥ दाऽ२३इवाऽ३१। वाऽ२३४५सोऽ६हाइ ॥
( त० ३।त० ८। म० ९ )४( डो । ५९७ )

( ३४८।२ )
एन्द्रयाहिहरिभिः । उहुवाहाइ॥ उपकण्वस्यसुष्टुतिम्। उहुवाऽ२३हाइ। दिवोअमू-३ ।
ष्याशासाऽ२३४ता॥ दाइवंयवाउ । वाऽ३॥ देऽ२३४वा । वसोऽ७हा। होऽ५इ॥ डा ॥
( दी० ३। त० १२। मा० ९ )५ ( डो । ५९८ )

( ३४९।१)　　　॥ वैश्वामित्रम् । विश्वामित्रोऽनुष्टुबिन्द्र ॥

आत्वागाऽ३इरोरथीरिवा॥ अस्थुः सुतेऽ२षुगिर्वाणाऽ३ः । ओऽ२३४वा ।
ओऽ२३४वा ॥ अभित्वासऽ२मानूऽ२षाताऽ२ । ओऽ२३४वा । ओऽ२३४वा ॥
गावोवाऽ२त्साऽ२म्॥ नधेऽ२३४ना । नाऽ५वोऽ६हाइ॥ ( दी० ७ प० १० मा० ४ )६( जी । ५९९)

---

[ साम तन्त्र सूत्राणि] ,५९७]३ [५९९]१ ( पृथक् रूपाणि न सन्ति ) [५९८]५ उप २ १९,
पादेशाय म् १२ ६ ७

तिरश्चीराङ्गिरस । इन्द्र । अनुष्टुप् । ( ऋ० ८।९५।७ )

एतो न्विन्द्रं स्तवाम शुद्धं शुद्धेन साम्ना ।
शुद्धैरुक्थैर्वावृध्वांसं शुद्ध आशीर्वान्ममत्तु ॥ ३५० ॥

शंयुर्बार्हस्पत्य । इन्द्र । अनुष्टुप् । ( ऋ० ६।४४।१ )

यो रयिवो रयिन्तमो यो द्युम्नैर्द्युम्नवत्तमः ।
सोमः सुतः स इन्द्र तेऽस्ति स्वधापते मदः ॥ ३५१ ॥

एतो न्विन्द्र२ स्तवाम शुद्ध२ शुद्धेन साम्ना ।
शुद्धैरुक्थैर्वावृध्वा२स२ शुद्धेराशीर्वान्ममत्तु ॥ ३५० ॥
यो रयिं वो रयिन्तमो यो द्युम्नैर्द्युम्नवत्तमः ।
सोमः सुतः स इन्द्र तेऽस्ति स्वधापते मदः ॥ ३५१ ॥

---

(३५०।१) ॥ शुद्धाशुद्धीये द्वे ( पदान्त निधनंशुद्धाशुद्धीयम् ) । द्वयोः इन्द्रोऽनुष्टुबिन्द्रः ॥
एतोन्विन्द्र२स्तवामा ॥ शुद्ध२शुद्धेनसाऽ२३म्ना । शुद्धैरुक्थैर्वावृध्वाऽ२३२सम् ।
शुद्धैराऽ२३शीऽ३ ॥ र्वाऽ२न् । ममाऽ२४औहोवा ॥ तुऽ२३४५ ॥

( दी० १० । प० ७ । मा० ३ )७ ( फि । ६०० )

(३५०।२) ॥ ऐडशुद्धाशुद्धीयम् ॥
एतोन्विन्द्र२स्तवाऽ६मा ॥ शुद्ध२शुद्धे । न । साम्नाऽ२ ॥ शुद्धाइरूऽ२क्थाऽ३इः ।
वावाऽ२ध्वाँऽ२३४२साम् ॥ शुद्धैराऽ२३शी ॥ र्वान्ममत्तु । इडाऽ२३भाऽ३४३ । ओऽ२३४५इ ॥ डा ॥

( दी० ४ । प० ११ । मा० ५ )८ ( तु । ६०१ )

(३५१।१) ॥ रयिष्ठे द्वे । द्वयोः गोतमोऽनुष्टुबिन्द्रः ॥
योरयिवोरयाहाउ ॥ ताऽ२३४माः । योद्युम्नैर्द्युम्नवत्तमः । सोमःसुतःसआऽ२३होइ ।
द्रताऽ२इ ॥ अस्तिस्वधापताऽ२३होयेऽ३ ॥ मदोऽ२३४५इ ॥ डा ॥

(३५१।२) ( दी० ७ । प० ८ । मा० ७ )९ ( जे । ६०२ )
योरयिवोरयि । तमोऽ२३४हाइ ॥ योद्युम्नैर्द्युम्नव । तमोऽ२३४हाइ ॥ सोमःसुतःसइ ।
द्रतोऽ२३४हाइ ॥ अस्तिस्वधापते । मदोऽ२३४हाऽ । होऽ५इ ॥ डा ॥

( दी० ७ । प० १० । मा० ५ )१० ( त्रु । ६०३ )

अष्टाविंशति प्रथम, द्वादश खण्ड ॥ १२ ॥ दशति ॥ ६ ॥

इति तृतीयोऽध्याय ॥ ३ ॥

---

[ साम-तन्त्र-सूत्राणि ] [६००]७ [६०३]१० ( पृथक् सूत्राणि न सन्ति )        [६०१]८ विद्यओ १०५३
भि ६४१,        [६०२]९ चन्ते ४५.७,

भरद्वाजो बार्हस्पत्य । इन्द्र । अनुष्टुप् ( ऋ० ६ । ४२ । १ )

प्रत्यस्मै पिपीषते विश्वानि विदुषे भर ।
अरङ्गमाय जग्मयेऽपश्चाद्दघ्वने नरे ॥ ३५२ ॥

प्रत्यस्मै पिपीषते विश्वानि विदुषे भर ।
अरङ्गमाय जग्मयेऽपश्चाद्दघ्वने नरः ॥३५२॥

वामदेवो गौतम शाकपूतो वा । इन्द्र । अनुष्टुप् । ( न ऋग्वेदीय )

आ नो वयो वयःशयं महान्तं गह्वरेष्ठां महान्तं पूर्विणेष्ठाम् ।
उग्रं वचो अपावधीः ॥ ३५३ ॥

---

(३५२.१)　॥ कौल्मबर्हिषं द्वे । द्वयोः कुल्मबर्हिरनुष्टुबिन्द्रः ॥

प्रत्यस्मैपिपाहाउ ॥ आइपीऽ२ताइ । वाइश्वानिवाइ । दुषेऽ२हाऽ३इ । भाऽ२रा ।
आरंऽ२०गमा ॥ याजाऽ२हाऽ२ । ग्माऽ३याइ ॥ अपाऽ२३ । श्चाऽ२दाऽ२३४औहोवा ॥
घ्वनेऽ२नराऽ२३४५ः ॥　( दं० ७ । प० ११ । मा० ९ )११ ( घो । ६०४ )

(३५२.२)

प्रत्यस्मैपीऽ२पीषताइ ॥ वाइश्वानिवाइ । दुषेभाराऽ२ । आरंऽ२०गमा । यजग्मा ।
याऽइ ॥ अपश्चाद्घ्वनाऽ२३होइ ॥ नरा । औऽ३होवा । होऽ५इ ॥ डा ॥
( दं० ६ । प० ११ । मा० ६ ) १२ ( कृ । ६०५ )

(३५२.३)　॥ नानदम् । इन्द्रोऽनुष्टुबिन्द्र ॥

प्रत्यस्मैपिपी । षताऽ२इ । वाऽ२३४इ । श्वानिविदुषे । भारा ॥ अरगमायज ।
ग्मयेऽ२४हाइ ॥ आपश्चादा ॥ घ्वनोऽ२३४वा । नाऽ५रोऽ६हाइ ॥
( दं० ५ । प० १० । मा० ४ )१३ ( भी । ६०६ )

(३५३.१)　॥ शाकपूतम् । शाकपूतिरनुष्टुबिन्द्रः ॥

आनोवयोवयःशाऽ६याम् ॥ महान्तगह्वराऽ२३४इष्ठाम् । महान्तपूर्विनाऽ२३४इष्ठाम् ॥
उग्रवाऽ२३चाः ॥ अपाऽ२वाऽ२धाऽ६५६इः ॥　( दं० ६ । प० ५ । मा० ८ )१४( डै । ६०७ )

---

[साम-तन्त्र-सूत्राणि] [६०४]११पता ३,१०५ मौ ५१२ [६०५]१२ [६०६]१३[६०७]१४(पृथक सूत्राणि न सन्ति)

प्रियमेध आङ्गिरस । इन्द्र । अनुष्टुप् ( ऋ० ८।६८।१ )

आ त्वा रथं यथोतये सुम्नाय वर्तयामसि ।
तुविकूर्मिमृतीषहमिन्द्र शविष्ठ सत्पते ॥ ३५४ ॥

प्रगाथ काण्व । इन्द्र । अनुष्टुप् । ( ऋ० ८।६३।१ )

स पूर्व्यो महानां वेनः क्रतुभिरानजे ।
यस्य द्वारा मनुष्पिता देवेषु धिय आनजे ॥ ३५५ ॥

आ त्वा रथं यथोतये सुम्नाय वर्तयामसि ।
तुविकूर्मिमृतीषहमिन्द्र२ शविष्ठ सत्पतिम् ॥ ३५४ ॥
स पूर्व्यो महोनां वेनः क्रतुभिरानजे ।
यस्य द्वारा मनुः पिता देवेषु धिय आनजे ॥ ३५५ ॥

---

(३५४।१) ॥ कौल्मलबर्हिषे द्वे । द्वयोः कुल्मलबर्हिरनुष्टुबिन्द्रः ॥

आत्वारथंयथोहोचा ॥ तायाइषुऽ२३४म्ना । यवर्त्तयामसितुविकूर्मीम् । आऽ२३४ती ।
षहम् ॥ आइन्द्राऽ२३४शावी ॥ ष्ठसत्पाऽ२३तीऽ३४३म् ॥ ओऽ२३४५इ ॥ डा ॥

( दी० ४ । प० ९ । मा० ६ )१५ ( धु । ६०८ )

(३५४।२)

आत्वारथयथा । तयाइ । आत्वारथाम् ॥ यथोतायो । औहोऽ२३४वा । ईऽ२३४हा ।
सुम्नायवर्त्तऽ३यामसि । औहोऽ३१इ । औऽ२होऽ२३४वा ॥ तुविकूर्मिमृऽ२तीइषहम् ।
औहोऽ३१इ । औऽ२होऽ२३४वा ॥ इन्द्र२शविष्ठऽ२सात्पतिम् । औहोऽ३१इ ।
औऽ२होऽ२३४५वाऽ६५६ ॥ ईऽ२३४हा ॥ ( दी० ११ । प० १, । मा० ८ )१६ ( कै । ६०९ )

(३५५।१) ॥ मधुश्चिन्निधनम् । प्रजापतिरनुष्टुबिन्द्र ॥

सपूर्व्यामहोनाऽ६मे ॥ वनःक्रतुऽ३भाइरानजेऽ३ । हाऽ३हा । औऽ३होऽ३वा ।
आइहीऽ२ । यस्यद्वारोऽ३मानुःपिताऽ३ । हाऽ३हा । औऽ३होऽ३वा । आइहीऽ२ ।
दाइवेषुधाऽ३ । हाऽ३हाइ । औऽ३होऽ३वा । आइहीऽ२ ॥ यआऽ२३ ।
नाऽ२जाऽ२३४औहोवा ॥ मधुश्चुताऽ२३४५ः ॥ ( दी० १० । प० १६ । मा० ९ ) १७( पो । ६१० )

---

[साम तन्त्र सूत्राणि] [६०८]१५ [६१०]१७ ( पृथक् सूत्राणि न सन्ति ) [६०९]१६ उणि वशाद्दिनी
दिर् १२ ८२

शंयुर्बार्हस्पत्य । इन्द्र । अनुष्टुप् । ( ऋ० ६।४६।१ )

त्वमु॒ वो॒ अप्र॑हणं गृणी॒षे शव॑सस्प॒तिम् ।
इन्द्रं॑ विश्वा॒साहं॒ नरं॒ मंहि॑ष्ठं वि॒श्वच॑र्षणिम् ॥ ३५७ ॥

वामदेव गौतम । दधिक्रा । अनुष्टुप् । ( ऋ० ४।३९।६ )

द॒धि॒क्राव्णो॑ अकारिषं जि॒ष्णोरश्व॑स्य वा॒जिनः॑ ।
सु॒र॒भि नो॒ मुखा॑ कर॒त् प्र ण॒ आयूं॑षि तारिषत् ॥ ३५८ ॥

श्यावाश्व आत्रेय । मरुत । अनुष्टुप् । ( न ऋग्वेदे )

यदी॑ वहन्त्याशवो भ्राजमाना रथेष्वा ।
पिबन्तो मदिरं मधु तत्र श्रवांसि कृण्वते ॥३५६॥
त्वमु वो अप्रहणं गृणीषे शवसस्पतिम् ।
इन्द्र विश्वासाहं नरं शचिष्ठं विश्ववेदसम् ॥ ३५७ ॥
दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः ।
सुरभि नो मुखा करत् प्र ण आयूंषि तारिषत् ॥ ३५८ ॥

---

(३५६।१)　　। उपसस्साम । उपानुष्टुबिन्द्र मरुतो वा ॥
यदीवहन्त्याशवः । यं । धेयादी॥ ओइवहन्ताओऽ१शाधाऽ२ः । ओइभ्राजमानारथाइषूऽ१वाऽ२। ओइपिबन्तोमदिरामाऽ१धूऽ२ ॥ ओइ । तत्रश्रवांसिकोवाऽ३ओऽ२३४वा ॥ ण्वाऽ५तोऽ६हाइ ॥　　(दी० ७।प० ६।मा० १०)१८ ( औ । ६११ )

(३५७।१)　　॥ भारद्वाजम् । भरद्वाजोऽनुष्टुबिन्द्र ।
त्वमुवाअ । प्रहा । हाऽ२३४णाम्॥ गृणीषेशवसः । पताइम्। आइन्द्राऽ३०वाइश्वा । सहाऽ३४होवेऽ२४ । नरामोऽ२३॥ शचिष्ठाऽ२३४०वी॥ श्वनाऽ३होऽ२३४ । वा । दाऽ५सोऽ६हाइ ॥　　(दी० ३।प० १२।मा० ९)१९ ( ञो । ६१२ )

(३५८।१)　　। ( दधिक्रम् )दाधिक्रा णम् । अग्निरनुष्टुबिन्द्र दधिर्वा वा ॥
ओहाइ । दधिक्राव्णाअकारिषम् । आहाइ ॥ ओहाइ । जिष्णोरश्वस्यवाजिनाऽ२३होइ । सुरभिनोमुखाकाऽ२३रात्॥ प्रनाऽ२३होइ । आयूऽ२३हो॥ षितााऽ२३इषाऽ३४३त् । ओऽ२३४५इ ॥ डा ॥　　( दी० ६।प० ११।मा० ११ )२० ( त । ६१३ )

---

[ साम-तन्त्र-सूत्राणि ,[६११] १८ नविष १२८९　　[६१२]१९ [६१३]२० ( पृथक् सूत्र ण न सन्ति )

जेता माधुच्छन्दस । इन्द्र । अनुष्टुप् । ( ऋ० १।११।४ )

पुरां भिन्दुर्युवा कविरमितौजा अजायत ।
इन्द्रो विश्वस्य कर्मणो धर्ता वज्री पुरुष्टुतः ॥ ३५९ ॥

प्रियमेध आङ्गिरस । इन्द्र । अनुष्टुप् । ( ऋ० ८।६९।१ )

प्रप्र वस्त्रिष्टुभमिषं मन्दद्वीरायेन्दवे ।
धिया वो मेधसातये पुरन्ध्या विवासति ॥ ३६० ॥

पुरां भिन्दुर्युवा कविरमितौजा अजायत ।
इन्द्रो विश्वस्य कर्मणो धर्ता वज्री पुरुष्टुतः ॥ ३५९ ॥

प्रप्र वस्त्रिष्टुभमिषं वन्दद्वीरायेन्दवे ।
धिया वो मेधसातये पुरन्ध्या विवासति ॥ ३६० ॥

वामदेवो गौतमः । इन्द्र । अनुष्टुप् । ( न ऋग्वेदाय )

कश्यपस्य स्वर्विदो यावाहुः सयुजाविति ।
ययोर्विश्वमपि व्रतं यज्ञं धीरा निचाय्य ॥ ३६१ ॥

---

(३५९।१) ॥ मारुतम् । मरुतोऽनुष्टुबिन्द्रः ॥

पुरांभिन्दुर्युवाकवीः ॥ अमितौजाअजायाऽ२३ता । आइन्द्राविश्वाऽ२ । स्याकर्माऽ२३४णाः ॥
धर्त्ता । वाज्रीवाऔऽ२३४वा ॥ पुरूऽ५ष्टुताः । होऽ५इ ॥ डा ॥

( दी० ६ । प० १ । मा० ७ )११ ( घे । ६१४ )

॥ एकादश द्वितीय, प्रथम खण्ड ॥ १ ॥ दशति ॥ ७ ॥

(३६०।१) ॥ वामदेव्यम् । वामदेवोऽनुष्टुबिन्द्रः ॥

प्रप्रवस्त्रिष्टुभमिषमोहाओहाऽ६ए ॥ वन्दद्वीरा । यआइन्दवेऽ२ ॥ ओऽ२हा ।
ओऽ३हाऽ३ए । धियावोमेधसाऽ१ताऽ३याइ । ओऽ३हा । ओऽ३हाऽ३ए ॥
पुरांधीऽ३याऽ२ ॥ विवोऽ२३४सा । साऽ५तोऽ६हाइ ॥

( दी० ६ । प० ११ । मा० ८ )१२ ( कै । ६१५ )

(३६१।१) ॥ काश्यपम् । कश्यपोऽनुष्टुबिन्द्र ॥

कश्यपस्यसुवर्विदाऽ६ए ॥ यावाहुस्स । युजावाऽ१ऽतीऽ२३४ । ययोर्विश्वमपि ।
व्रताऽ३म् ॥ यज्ञान्धीऽ३राः ॥ निचाऽ२३ । आऽ२या२३४ओहोवा ॥ ऊऽ२३४पा ॥

( दी० ४ । प० ९ । मा० ५ )२३ ( घु । ६१६ )

---

[ साम-तन्त्र-सूत्राणि ] [६१४]२१ [६१६]२३ ( पृथक् सूत्राणि न सन्ति ) [६१५]२२ न्या० १४३, वी ११२९,

ऋत श्याय । पवमान सम । उष्णिक् । ( ऋ० ९ । १०३ । १ )

प्र पुनानाय वेधसे सोमाय वच उद्यतम् ।
भृतिं न भरा मतिभिर्जुजोषते ॥ ५७३ ॥

प्र पुनानाय वेधसे सोमाय वच उच्यते ।
भृतिं न भरा मतिभिर्जुजोषते ॥ ५७३ ॥

(५७२।३) ॥ यौते द्वे । द्युतोष्णिक्सोम ।
सोमःपुनानऊ॥ मिणा। अव्यवारंविधानाऽ२३ती॥ अग्रेवाचाः॥
पवमानाः। काऽ३निक्र॥ दाऽ२३४५त्॥ (ग्रा० ७ । प० ७ । मा० ८ )२८ ( छी । ११५१ )

(५७२।४)
सोमःपुनानऊर्मिणाऽ२३४एही॥ अव्यंवारंविधावताऽ२३४एही॥ अग्रेवाचःपवमानाऽ२३४एही॥
कानी। क्रदटेऽ३४। हियाऽ६हा। होऽ५इ॥ डा॥ (ग्रा० ११ । प० ८ । मा०५)२९( गु । ११५२ )

(५७३।५) ॥ आतीपादीये द्वे । द्वयो प्रजापतिरुष्णिक्सोमः ॥
सोमःपुना। नऊऽ३२र्मीऽ२३४णा॥ अव्यंवारम्। विधावति॥ अग्राऽ३२इ।
वाऽ२३४चाः॥ पवाऽ३२। माऽ२३४नाः॥ कनाऽ२इक्राऽ५दाऽ६५६त्॥

(५७२।६) ( दा० ३ । प० ९ । मा० ७ )३०( ढे । ११५३ )
सोमःपुना। हो। नऊर्मिणाऽ६ए॥ अव्यंवारविधाऽ१वाऽ२ती। अग्रेवाऽ२३४५।
चाऽ२३४५ः॥ पवमाऽ२३नाऽ३ः॥ काऽ२नाऽ२३४औहोवा॥ क्रदटेऽ२३४५॥

( दा० ६ । प० ९ । मा० ७ )३१( घु । ११५४ )

(५७३।१) ॥ सोमसामानि चत्वारि । चतुर्णां सोम उष्णिक्सोम ॥
प्रपुनाऽ२३नायवेधसाइ॥ होट। होइ। सोमायवचाउच्यताताऽ२इ॥
भृतिन्नभरामतिभाऽ२इः॥ जुजोषाऽ२३ताऽ३४३इ ओऽ२३४५इ॥ डा॥

( दी० ५ । प० ८ । मा० ९ )३२( वो । ११५५ )

(५७३।२)
प्रपुनानाहोऽ५यवेधसाइ॥ सोमाओऽ३होऽ३४। यवचउच्यताइ॥
भृताओऽ३होऽ३४। नभरामतिभाइः॥ जुजाऽ३१उवाऽ२३॥ पाऽ२३४वे॥

( दा० । प० ७ । मा० ८ )३३( फे । ११५६ )

[साम-तन्त्र-सूत्राणि][११५१]२८[११५२]२९ [११५५]३२ [११५६]३३( पृथक् सूत्राणि न सन्ति )
[११५३]३० इत्याम् ६ ३ ७ [११५४]३१ ग्रेरतनाया ५ ३ ६, वि १० १० ३,

पर्वतनारदौ काण्वौ । पवमान सोम । उष्णिक् । ( ऋ० ९ । १०५ । ४ )

गोमन्न इन्दो अश्ववत्सुतः सुदक्ष धन्व । शुचिं ते वर्णमधि गोषु दीधरम् ॥ ५७४ ॥

पर्वतनारदौ काण्वौ, शिखण्डिन्यावप्सरसौ काश्यपौ वा । पवमानः सोम । उष्णिक् । ( ऋ० ९ । १०४ । ४ )

अस्मभ्यं त्वा वसुविदमभि वाणीरनूषत । गोभिष्टे वर्णमभि वासयामसि ॥ ५७५ ॥

अग्निश्चाक्षुष । पवमान सोम । उष्णिक् । ( ऋ० ९ । १०६ । १३ )

पवते हर्यतो हरिरति ह्वरांसि रंह्या । अभ्यर्षन्स्तोतृभ्यो वीरवद्यशः ॥ ५७६ ॥

गोमन्न इन्दो अश्ववत्सुतः सुदक्ष धनिव ।
शुचिं च वर्णमधि गोषु धारय ॥ ५७४ ॥
अस्मभ्यं त्वा वसुविदमभि वाणीरनूषत ।
गोभिष्टे वर्णमभि वासयामसि ॥ ५७५ ॥
पवते हर्यतो हरिरति ह्वराꣳसि रꣳह्या ।
अभ्यर्ष स्तोतृभ्यो वीरवद्यशः ॥ ५७६ ॥

---

(५७४।१)

गोऽ४मन्नः । होइ । इन्दोअश्ववाऽ६दे ॥ सुतःसुदक्षधाऽ१नीऽ३वा ।
शुचिंचवाऽ२३४५ ॥ णमधिगोऽ२३४औहोवा ॥ षूऽ२३४धा । रया ।
औऽ३होऽया । होऽ५इ ॥ डा ॥ ( दी० ३ । प० ११ । मा० ५ )३४( हु । ११५७ )

(५७५।१)

हावास्मा ॥ भ्याऽ२३४०त्वा । वासुवीऽ२३४दाम् । अभाऽ२इवाऽ२३४णी ।
अनाऔऽ२३४वा । षाऽ२३४ता ॥ गोभिष्टेव । णमाभिवाऽ२३ ॥ सयामसिहोऽ२३४५इ ॥ डा ॥
( दी० ३ । प० १० । मा० ५ )३५( षु । ११५८ )

(५७६।१) ॥ यशाꣳसि त्रीणि । त्रयाणां सोमोष्णिक सोमः ॥

पवतेहा ॥ र्यतोदरिः । औऽ२होऽ१इ । औऽ२होऽ२३४वा । आतिह्वारांꣳसिरꣳहिया ।
औहोऽ३१इ । औऽ२होऽ२३४वा ॥ अभ्यर्षस्तोतृभ्योवा । औऽ२होऽ२१इ ।
औऽ२होऽ२३४वा ॥ राऽ२वाऽ२३४औहोवा ॥ यशोयशाऽ२३४५ः ॥
( दी० १० । प० १२ । मा० ६ )३६( फू । ११५९ )

---

[साम-तन्त्र-सूत्राणि][११५७]३४[११५८]३५ ( पृथक सूत्राणि न सन्ति )[११५९]३६ नद ४५८

द्वित आप्त्यः । पवमान सोम । उष्णिक् । (ऋ० ९। १०३। २)

परि कोशं मधुश्चुतमव्यये वारे अर्षति ।
अभि वाणीरृषीणां सप्त नूषत ॥ ५७७ ॥

गौरिवीति शाक्त्य । पवमान सोम । ककुप् । (ऋ० ९। १०८। १)

पवस्व मधुमत्तम इन्द्राय सोम क्रतुवित्तमो मदः ।
महि द्युक्षतमो मदः ॥ ५७८ ॥

परि कोशं मधुश्चुतꣳ सोमः पुनानो अर्षति ।
अभि वाणीरृषीणाꣳ सप्ता नूषत ॥ ५७७ ॥
पवस्व मधुमत्तम इन्द्राय सोम क्रतुवित्तमो मदः ।
महि द्युक्षतमो मदः ॥ ५७८ ॥

---

(५७७।१)
पवा॒ऽ३ । पवतेहा ॥ यैताहारिः । औहोइ । औऽ३होइ । औहोइ ।
आतिह्वराऽ२ऽसिरऽह्निया । औहोइ । औऽ३होइ । औहोइ ॥ अभ्यर्षस्तोतृभ्योवा ।
औहोइ । औऽ३होइ । औहोऽ३ ॥ राऽ२वाऽ२३४औहोवा ॥ यशोयशाऽ२३४५ः ॥

(५७७।२)　　(दी० १५। प० १६। मा० ११)३७( प । ११६० )
पवतेहयत । हराऽ३ः । आऽ२३४ । तिह्वराऽसिर । ह्निया ॥ अभ्यर्षाऽ२३४ ।
स्तोतृ ॥ भ्योवाऽ३६ ॥ राऽ२वाऽ२३४औहोवा ॥ याऽ२३४शाः ॥
(दी० ६। प० १०। मा० ५)३८ ( डु । ११६१ )

(५७७।३)　　॥ भारद्वाजम् । भरद्वाज उष्णिक् सोम० ॥
परिकोऽ२शंमधुश्चुताम् ॥ सोमःपुनानोअर्षति । हायेऽ३ ॥ आभिवाऽ२३४५ ॥
णीरृषीणाऽस । प्तानाओऽ२३४वा ॥ याऽ२३४वा ॥ (दी० ६। प० ७। मा० ३)३९(खि । ११६२ )

एकोनचत्वारिंशत्, दशम खण्ड ॥ १० ॥ दशति ॥ ८ ॥
॥ इत्यौष्णिहम् ॥
॥ इति ग्रामे गेय गाने सप्तदशस्यार्द्धः प्रपाठक ॥

(५७८।१)　　॥ वासिष्ठम् । वासिष्ठ ककुप् सोम० ॥
पावा ॥ स्वमाधुमा । त्तामाओऽ२३४वा । इंऽ२३४०द्रा । यसोमक्रतुवित्तमोमदाऽ३ः ॥
ओइ । माहाओऽ२३४वा ॥ द्युक्षतमोमदाऽ२३४५ः ॥ (दी० ३। प० ८। मा० ५)१( डु । ११६३ )

---

[साम-तन्त्र सूत्राणि][११६०]३७　[११६१]३८　[११६३]१　( पृथक् सूत्राणि न सन्ति )
[११६२]३९ अभि ।ग ४ ८ ९,

उध्वर्सद्मा आङ्गिरस· । पवमान सोमः । ककुप् । ( ऋ० ९ । १०८ । ९ )

अभि द्युम्नं बृहद्यश इषस्पते दिदीहि देव देवयुः ।
वि कोशं मध्यमं युव ॥ ५७९ ॥

अभि द्युम्नं बृहद्यश इषस्पते दिदीहि देव देवयुम् ।
विकोशं मध्यमं युव ॥ ॥ ५७९ ॥

---

(५७८।२) ॥ सफे द्वे । द्वयोर्देवाः ककुप् इन्द्रसोमौ ॥

पाऽ३४ । वस्वम । धुमत्ताऽ६माः ॥ आइन्द्राऽ२ । यसोमाऽ२ । क्रतुवाइत्ताऽ३मोऽ३ ।
माऽ२दाः ॥ महियुक्षात्ताऽ२मोऽ३ ॥ माऽ३४५दोऽ६हाइ ॥

( दी० नास्ति । प० ९ । मा० ५ )२( लु । ११६४)

(५७८।३)

पवस्वमधुमा । इहा ॥ तमः । इन्द्रायसोमक्रतुवित्तमोमाऽ२३दाः । इहा ॥
महाइयूऽ२३क्षा । इहा ॥ तमोमाऽ२३दाऽ३४२ः । ओऽ२३४५इ ॥ डा ॥

( दी० ५ । प० १० । मा० ५ )३( सु । ११६५ )

(५७८।४) ॥ वासिष्ठम् । वसिष्ठः ककुप् सोमेन्द्रौ ॥

पवस्वमा । एऽ५ । धुमा ॥ तमाः । इन्द्रायसोऽ३ । हाऽ । औऽ३हो ।
माक्रातूवीऽ२३दाऽ३ । हाऽ । औऽ३होऽ३४ । तमोऽ३४मदाः ॥
महायेऽ३ ॥ घूऽ२क्षाऽ२३४औहोवा ॥ तमोमदाऽ२३४५ः ॥

( दी० ५ । प० १४ । मा० ४ )४( मी । ११६६ )

(५७८।५) ॥ सफम् । देवाः ककुप् सोम· ॥

पवस्वाऽमधु । मत्ताऽ२३४माः ॥ इन्द्रायसोमाऽ२ । क्रतुवाइत्ताऽ३मोऽ३ ।
माऽ२२३४दाः ॥ महाइ ॥ द्युक्षात्ताऽ२मोऽ२ । माऽ३४५दोऽ६हाइ ॥

( दी० १ । प० ८ । मा० ५ )५( गु । ११६७ )

(५७९।१) ॥ वैविराणि चत्वारि । चतुर्णांमिविरः ककुप् सोम· ॥

अभाइ । द्युम्नाऽ२०बृऽ२हद्यशः ॥ इषाः । पतेदिदीहिदेऽ२वाऽ२देवयुम् ॥
विको । शम्म ॥ ध्यमाऽ२०यूऽ५वाऽ६५६ ॥ ( दी० ३ । प० ७ । मा० ४ )६( ठी । ११६८ )

---

[साम-तन्त्र-सूत्राणि][११६४]१[११६७]५[११६८]३ ( पृथक् सूत्राणि न सन्ति ) [११६५]३ द्वि० ८ २ ६
[११६६]४ आदि ६ १ ५,

ऋजिश्वा भारद्वाज । पवमान सोम । ककुप् । ( ऋ० ९।१०८।७ )

आ सोता परि षिञ्चताश्वं न स्तोममप्तुरं रजस्तुरम् ।
वनक्रक्षमुदप्रुतम् ॥ ५८० ॥

आ सोता परि षिञ्चताश्वं न स्तोममप्तुरꣳ रजस्तुरम् ।
वनप्रक्षमुदप्रुतम् ॥ ५८० ॥

---

(५७९।२)
अ । भिद्युम्नाम् ॥ बृहाद्याऽ१शाऽ२ः । इषास्पताइ । दीदीहाऽ२३४इदे ।
घदाइवाऽ२३४यूम् ॥ विकौवाओऽ२३४वा ॥ शर्म्मण्यमाऽ३१उवाऽ२३ ॥
यूऽ२३४वा ॥ ( दी० ना । प० ९ । मा० ८ )७ ( लै । ११६९ )

(५७९।३)
अभिद्युम्नम्बृहद् । इहा ॥ यशः । इषस्पतेदिदीहिदेवदेवाऽ२३यूम् ॥
विकौहोवाऽ३हाइ ॥ शर्म्माऽ२ण्यमंयुव । इडाऽ२३माऽ३४३ । ओऽ२३४५इ ॥ डा ॥
( दी० ७ । प० ९ । मा० ५ )८ ( ष्ठु । ११७० )

(५७९।४)
अभिद्युम्नंबृऽ६हद्यशाः ॥ इषस्पताइ । दिदीहिदाइ । वादेवयूम् ॥
विकोशर्म्मण्यमाऽ२३ꣳहोइ ॥ यूऽ२३४वा । एहियाऽ६हा । होऽ५इ ॥ डा ॥
( दी० ५ । प० ९ । म० ६ )९ ( भू । ११७१ )

(५८०।१) ॥ कार्णश्रवसानि त्रीणि । त्रयाणां कर्णश्रवा ककुबश्च ॥

आसोतापा ॥ राऽ२इषाऽ२३४औहोवा । चाऽ२३४वा । अश्वन्नस्तोममप्तुराꣳऽ२ꣳरजस्तुरम् ॥
औयेऽ३ । वनाऽ३ ॥ औयेऽ३ । प्रक्षाऽ२४ । औहोवा ॥ उदप्रुताऽ२३४५म् ।
( दी० ९ । प० १० । मा० ४ )१० ( नी । ११७२ )

---

[साम-तन्त्र-सूत्राणि ][११६९]७ आनीव्यम् ५.१० ९, [११७२]१० अनुरंनावतानि ३ ७ ४,
[११७०]८ [११७१]९ (पृथक् सूत्राणि न सन्ति )

(५८०।१)

आसोतापा॥ रिपि। चताऽ२। ऊऽ२। हाऽ२इ। ऊऽ२। अश्वन्नस्तोमम।
प्तुराऽ२म्। ऊऽ२। हाऽ२इ। ऊऽ२। रज। स्तुराऽ२म्। ऊऽ२। हाऽ२इ। ऊऽ२॥
वन। प्रक्षाऽ२म्। ऊऽ२। हाऽ२इ। ऊऽ२॥ उद। मूऽ२ताऽ२३४औहोवा॥
उऽ२३२३४पा॥ (दी० ६। प० २४। मा० ८)११( ह्लै। ११७३ )

(५८०।२)

आसोतापा॥ रि। पाइ। चता। अश्वान्नस्तो। मामप्तूऽ२३४राम्।
रजास्तूऽ२३४राम्॥ वनोहाइ॥ प्रोक्षामूऽ२३दा। हिम्मायेऽ२॥ मूऽ२३४ताम्॥
(दी० ३। प० ११। मा० ५)१२( डु। ११७४ )

(५८०।३) ॥ वाचस्सामानि त्रीणि। त्रयाणां वाक्कृयश्वः॥

ओसोतापारीऽ६पिश्नता॥ आश्वाओऽ२३४वा। नस्तोममप्तुरोऽ२ऽ२रजस्तुराऽ२३म्॥
होइ। वानाओऽ२३४वा॥ प्रक्षमुदमुताऽ२३४५म्॥ (दी० ६। प० ६। मा० ५)१३( क्रु। ११७५ )

(५८०।४)

आसोऽ२३४औहोवा॥ तापराइपिश्नाताऽ२। आश्वन्नस्तो। मामप्तूराऽ२म्।
रजास्तूऽ२३४राम्॥ वनोहाइ॥ प्राक्षमुदाऽ३१उवाऽ२३॥ मूऽ२३४ताम्॥
(दी० ५। प० ८। मा० ७)१४( बे। ११७६ )

(५८०।५)

आसोतापा। हो। रिपिश्नताऽ६ए॥ आश्वन्नस्तो। मामप्तूराऽ२म्।
राजस्तुरम्॥ वानप्राक्षाऽ२३म्॥ ऊऽ२३दाऽ३। मूऽ३४५तोऽ६हाइ॥
(दी० ४। प० ९। मा० ५)१५( घु। ११७७ )

---

[ साम-तन्त्र-सूत्राणि][११७३]११[११७४]१२[११७५]१३[११७७]१५ (पृथक् सूत्राणि न सन्ति )
[११७६]१४ वि ५ ३ १०

॥ कृतयशा आङ्गिरस । पवमान सोम । ककुप् । ( ऋ॰ ९ । १०८ । ११ )

एतमु त्यं मदच्युतं सहस्रधारं वृषभं दिवो दुहुः ।
विश्वा वसूनि बिभ्रतम् ॥ ५८१ ॥

एतमु त्यं मदच्युतꣳ सहस्रधारं वृषभं दिवोदुहम् ।
विश्वा वसूनि बिभ्रतम् ॥ ५८१ ॥

---

(५८१।१)　　॥ कौल्मलबर्हिषे द्वे । द्वयो कुल्मलबर्हिः ककुप् वृषभा ॥
एताम् ॥ ऊत्याम् । मदाऽ२च्यूऽ२३४ताम् । सहास्रधा । रांवृषभाऽ३म् ।
दिवोऽ२दूऽ२३४हाम् ॥ विश्वाऽ२होऽ१इ । होइ ॥ वाऽ२३सूऽ३ ।
नाऽ२इबाऽ२३४औहोवा ॥ भ्राऽ२३४ताम् ॥　( दी॰ २ । प॰ ११ । मा॰ १० )१६( चौ । ११७८ )

(५८१।२)
एतामूत्याम् ॥ मदाऽ३१उवाऽ२३ । च्यूऽ२३४ताम् । सहस्रधारंवृषभंदिवोदुहाऽ२३म् ॥
वाइश्वावासू ॥ निबाऽ३१उवायेऽ३ ॥ भ्राऽ२३४ताम् ॥
( दी॰ २ । प॰ ७ । मा॰ ७ )१७( छे । ११७९ )

(५८१।३)　　॥ सादन्तीयम् ( सादन्तु ) । प्रजापतिः ककुप् वृषभः ॥
एतमुत्यम् । एऽ५ । मदा ॥ च्युताम् । सहस्रधारंवृषभंदिवोदूऽ२३हाम् ॥
वाइश्वाऽ२वासूऽ२३ ॥ निबोऽ२३४वा । भ्राऽ५तोऽ६हाइ ॥
( दी॰ ३ । प॰ ८ । मा॰ ५ )१८( डु । ११८० )

(५८१।४)　　॥ कौल्मलबर्हिषाणि त्रीणि । त्रयाणां कुल्मलबर्हिः ककुप् वृषभा ॥
एतमुत्यम् । ओहाइ । मदच्युतम् । ओहाइ ॥ साहस्राऽ२३४धा ।
रंवार्षाऽ२३४माम् । दिवोदुहमोऽ२३४हाइ ॥ विश्वाऽ२होऽ१इ ॥ वाऽ२३सूऽ३ ।
नाऽ२इबाऽ२३४औहोवा ॥ भ्राऽ२३४ताम् ॥　( दी॰ ४ । प॰ ११ । मा॰ १० )१९( तौ । ११८१ )

(५८१।५)
एतामुत्यमदाच्युताम् ॥ साहस्रधा । रा॰वृषभाऽ२म् । दिवोऽ२ । दुहमोइ ॥
विश्वावसूनिबाऽ२३हाइ ॥ भ्रातमाऽ३१उवाऽ२३ ॥ ऊऽ३२३४पा ॥
( दी॰ ३ । प॰ ८ । मा॰ ५ )२०( डु । ११८२ )

---

[साम-तन्त्र-सूत्राणि] ११७८।१६ एवर् जराया ५८६, [११७९]१७ आनृतीयाच्चतुर्थे ३३५, शिष्यान्धो १२१, [११८०]२० ऋतु १२८ द्वितीयम् ७२९ [११८०]१८ [११८१]१९ (पृथक् सूत्राणि न सन्ति)

अवत्सारो राजर्षि । पवमान सोम । ककुप् । ( ऋ० ९ । १०८ । १३ )

स सुन्वे यो वसूनां यो रायामानेता य इळानाम् ।

सोमो यः सुक्षितीनाम् ॥ ५८२ ॥

स सुन्वे यो वसूनां यो रायामानेता य इडानाम् ।

सोमो यः सुक्षितीनाम् ॥ ५८२ ॥

---

(५८१।६)

एताऽ३४म् । उत्यम्मदा । च्युताम् ॥ सहस्रधारेऽ२०वृ । षभम् । दिवोऽ२३१२३ ।

दूऽ२३४हाम् ॥ विश्वावसूनिबिाऽ३ओयेऽ३ ॥ आऽ२३४ताम् । एहियाऽ६हा ॥ होऽ५इ ॥ डा ॥

( दी० ६ । प० १२ । मा० ७ )२१( खे । ११८३ )

(५८२।१) ॥ लोमनी द्वे ( दीर्घम् ) । द्वयोर्भरद्वाज ककुप् सोमः ॥

साङ्ग ॥ न्वेयोवसूऽ२३नाम् । योराऽ२याभाऽ२ । नेतायइडाऽ२३नाम् ॥

सोऽ२३मा ॥ यःसुक्षिताऽ२३४इनोऽ६हाइ ॥ ( दी० ४ । प० ६ । मा० ६ )२२( तु । ११८४ )

(५८२।२)

ससुहाउ ॥ न्वेयोवसूनाऽ२३४हाउ । योराऽ२यामाऽ२ ॥ नेतायः ॥ इडानाऽ२३४हाउ ॥

सोमोयःसूऽ२हाउ । क्षितीनाम् । औऽ२३होवा । होऽ५इ ॥ डा ॥

( दी० ९ । प० १० । मा० ७ )२३( ने । ११८५ )

(५८२।३) ॥ सोमसामानि त्रीणि । त्रयाणां सोमः ककुप् सोमः ॥

सः । स्वेसाङ्ग ॥ न्वेयोवसाऽ३१उवाऽ२३ । नाऽ२३४५म् । योरायामाऽ२नेतायइडाऽ२नाऽ३म् ॥

सोमोवाओऽ२३४वा ॥ यःसुक्षिताऽ३१उवायेऽ३ ॥ नाऽ२३४५म् ॥

(५८२।४) ( दी० ९ । प० ८ । मा० ८ )२४( दै । ११८६ )

ससुन्वेऽ२३योवसूनाम् ॥ योरायाऽ१माऽ२३ने । तायइडाऽ२३४५नाऽ६५६म् ॥

सोमोऽ२यःसुक्षितीनाम् । सोमाऽ२३४५ः ॥

(५८२।५) ( दी० ८ । प० ५ । मा० ५ )२५( णु । ११८७ )

ससुन्वेयाः । एवाङ्ग ॥ नोयोराऽ१याऽ२३मा । नेतायइडाऽ२३नाऽ२३४म् ॥

सोमाऽ२ः ॥ यःसुक्षि । ताऽ२३४इ ॥ नाऽ२३४५म् ॥ ( दी० ६ । प० ८ । मा० ६ )२६ ( गू । ११८८ )

---

[साम-तन्त्र-सूत्राणि][११८३]२१ चारणि ३ १.६. [११८४]२२[११८५]२३[११८६]२४[११८७]२५

[११८८]२६ ( पृथक् सूत्राणि न सन्ति )

शक्तिर्वासिष्ठ । पवमान सोम । ककुप् । ( ऋ० ९ । १०८ । ३ )

त्वं ह्यङ्ग दैव्या पवमान जनिमानि द्युमत्तमः ।

अमृतत्वाय घोषयः ॥ ५८३ ॥

उरुराङ्गिरस । पवमान सोम । ककुप् । ( ऋ० ९ । १०८ । ५ )

एष स्य धारया सुतोऽव्यो वारेभिः पवते मदिन्तमः ।

क्रीळन्नूर्मिरपामिव ॥ ५८४ ॥

त्वꣳ ह्या३ङ्ग दैव्यं पवमान जनिमानि द्युमत्तमः ।

अमृतत्वाय घोषयन् ॥ ५८३ ॥

एष स्य धारया सुतोऽव्या वारेभिः पवते मदिन्तमः ।

क्रीडन्नूर्मिरपामिव ॥ ५८४ ॥

---

(५८३।१)          ॥ शीतोष्माणि चत्वारि । चतुर्णां शीतोष्मः ककुप् सोमः ॥

त्वꣳहिया॥ गदाइनियपवमानजनिमानिऽ३द्युमाऽ२ । तामाऽ२ः॥ अमाऽ२त्तास्त्वाऽ२३ ॥

यघोऽ२३४वा । पाऽ५योऽ६हाइ ॥          ( दी० २ । प० ६ । मा० ३ )२७( चि । ११८९ )

(५८३।२)

त्वꣳहिया॥ गदाइयिय । पवमान । होवाऽ३हाइ । जनिमाऽ२३नीऽ३४ ।

द्युम । ताऽ३मः॥ अमाऽ२३ ॥ ताऽ२त्वाऽ२३४औहोवा॥ यघोऽ३पयाऽ२३४५न् ॥

(५८३।३)          ( दी० ३ । प० १० । मा० ५ )२८( णु । ११९० )

त्वꣳहंगदा॥ यिय । पवमानजनिमानिद्युमत्ताऽ२३माः॥ अमात्तोऽ२३त्वाऽ३॥

यघोऽ२३४वा । पाऽ५योऽ६हाइ ॥          ( दी० २ । प० ६ । मा० २ )२९( चा । ११९१ )

(५८३।४)

त्वꣳहोऽ३अंगदैवियाः॥ पवमाऽ२ना । जनिमाऽ२नायेऽ३४ । द्युम ।

ताऽ३माः॥ अमात्तोऽ३त्वाऽ३॥ यघोऽ२३४वा । पाऽ५योऽ६हाइ ॥

( दी० १ । प० ८ । मा० ३ )३०( गि । ११९२ )

(५८४।१)          ॥ गायत्रपार्श्वम् । देवाः ककुप् सोम ॥

एषाः॥ स्याधारयाऽ३१उवाऽ२३ । सूऽ२३४ताः । अव्योऽ२वारेभिःपवतेमदिन्तमः ॥

क्रीडान्नूऽ१र्मीऽ२ः॥ अपाऽ३म् । हिम्ऽ२३स्थिवाऽ३॥ आइवाऽ२३४५ ॥

( दी० ६ । प० ८ । मा० ८ )३१( गै । ११९३ )

---

[साम-तन्त्र-सूत्राणि] [११८९]२७ [११९०]२८ [११९१]२९ [११९२]३०( पृथक् सूत्राणि न सन्ति )
[११९३]३१ दिवु ३.७.१०,

ऋजिश्वा भारद्वाज । पवमान सोमः । ककुप् । ( ऋ० ९ । १०८ । ६ )

य उस्रिया अप्या अन्तरश्मनो निर्गा अकृन्तदोजसा ।
अभि व्रजं तत्निषे गव्यमश्व्यं वर्मीव धृष्णवा रुज ॥ ५८५ ॥

य उस्रिया अपि या अन्तरश्मनि निर्गा अकृन्तदोजसा ।
अभि व्रज तत्निषे गव्यमश्व्य वर्मीव धृष्णवा रुज ।
ओ३म् वर्मीव धृष्णवा रुज ओऽ३म् ॥ ५८५ ॥

---

(५८४ ५८५।२)   ॥ सन्तनि । देवा ककुप्युस्त्रिया अभिमजन्तेति विष्टारपङ्क्ति सोमः ॥

एषाहाउ ॥ स्याधारयाऽ३१उवाऽ२३ । सुऽ२३४ताः । अव्याऽ२वारेभिःपवतेमदिन्तमाऽ२३ ॥
क्रीडन्हाउ ॥ ऊर्मिरपाऽ३१उवाऽ२३ ॥ ईऽ२३४वा ॥ ह्व ॥ १ ॥
यउस्रियाऽ२अपियाअन्तरश्मनीऽ२३ ॥निर्गाहाउ ॥अकृन्तदाऽ३१उवाऽ२३। ओऽ२३४सा॥ह्व॥२॥
अभिव्रजन्तत्निषेगव्यमश्वियाऽ२३म् ॥ वर्मीहाउ ॥ वाधृष्णवाऽ३१उवाऽ२३ ॥ रुऽ२३४जा॥चि३॥

( सी० १० । प० १५ । मा० १४)३२(मी । ११९४–११९५)

(५८४।३)   ॥ सोम सामानि त्रीणि । सोम ककुप् सोमः ॥
एषस्यधा । रायाऽ१सुताऽ२ः॥ अव्यारारा३ । भाइपवते । मदिन्तमाः ॥
क्रीडन्नूऽ२३र्मीऽ३ः॥ आऽ२३पाऽ३म् । आऽ३४५इवोऽ६हाइ ॥

( दी० ६ । प० ८ । मा० ८)३३( गे । ११९६ )

(५८४।४)
एषस्याऽ३धारयासुताः॥ अव्याहोऽ२इ । वाराभिःपवतेमादिन्त्रामाऽ२ः ॥
क्रीडाऽ२न्हाऽ१इ । ऊऽ२३र्मीः॥ अपामिना । औऽ३होवा । हाऽ२इ ॥ डा ॥

( दी० ८ । प० ९ । मा० ६ )३४( हू । ११९७ )

---

[साम-तन्त्र-सूत्राणि][११९४ ११९५]३२ [११९६]३३ अेष्पादे पव २ १ १ [११९७]३४ (पृथक सूत्राणि न सन्ति)

(५८४।१)

एपस्यधाऽ२रयासुताः॥ अव्याचाराइ। भिःपवताऽ२३इ। मदिन्तमाः॥
क्रौडन्नूर्मिरपोवाऽ३ओऽ२३४वा॥ ओऽ५इवोऽ६हाइ॥ (दी० ६। प० ६। मा० ७)३५( के। ११९८)

पवनिगर, एकादश खण्ड ॥११॥ दशतिः ॥९॥ इति प्रथमे गेय गाने सप्तदश प्रपाठक ॥१७॥

॥ इति षयुपधिगट ॥ ॥ इति पवमानाख्य चतुर्थ गानं समाप्तम् ॥

॥ इति ग्रन्थस्य तृतीय पर्वखाण्ड समाप्तम् ॥ इति पावमानं काण्डम् ॥

॥ इति षष्ठ प्रपाठक ॥ ६ ॥

॥ इति ग्राम गेयगानं समाप्तम् ॥

[ साम-तन्त्र-सूत्राणि ] [११९८]३५ ( पृथक् सूत्राणि न सन्ति )

## पूर्वार्चिकस्य ग्रामगेय-गानानां प्रपाठकानुसारेण सूची।

| प्रपा० | प्रथमोऽर्धः | द्वितीयोऽर्धः | सर्वयोगः | पृष्ठं |
|---|---|---|---|---|
| | | आग्नेयपर्व। ( १८१ ) | | |
| १ | ३४ | ३७ | ७१ | १-२० |
| २ | ४० | ३१ | ७१ | २१-४१ |
| ३ | ३९ | × | ३९ | ४२-३९ |
| | | ऐन्द्रपर्व। ( ६३३ ) | | |
| „ | × | ३१ | ३१ | ४९-५५ |
| ४ | ३४ | ३६ | ७० | ५६-६९ |
| ५ | ३५ | ३५ | ७० | ७० ८५ |
| ६ | ३७ | ३५ | ७२ | ८५-१०० |
| ७ | ३३ | ३६ | ६९ | १०३-१२१ |
| ८ | ३६ | ३४ | ७० | १२२-१४४ |
| ९ | ३१ | ३१ | ६६ | १४५-१६४ |
| १० | ३४ | ३५ | ६९ | १६४-१८० |
| ११ | ३६ | ३८ | ७४ | १८१-२०० |
| १२ | ४२ | × | ४२ | २०२-२१४ |
| | | पावमानपर्व। ( ३८४ ) | | |
| १२ | × | ३१ | ३१ | २१४-२२० |
| १३ | ३८ | ३५ | ७३ | २२०-२३५ |
| १४ | ३६ | ३० | ६६ | २३५-२५१ |
| १५ | ३६ | ३० | ६६ | २५१-२६९ |
| १६ | ३९ | ३५ | ७४ | २७०-२८९ |
| १७ | ३९ | ३५ | ७४ | २८९-३०५ |

११९८ सर्वयोगः।



# अथारण्यक-गानम् ।

## ( गेय--गानम् । )

### अथार्क-पर्व ।

१ यद् याव इन्द्र ते० ।( ऋ० ८ । ७० । ५, सा० २७८ । ९२ आ० से० ४८१ )

---

( १।१ ) ॥ अष्टौ वैरूपाणि ( अष्टो वैरूपम् ) । वैरूपो बृहतीन्द्र इन्द्रसूर्यौ वा । ॥

ओम् ॥ यद्यावई ॥ द्रताऽ३१उवाऽ२३ । शाऽ२३४ताम् । हाहाऽ३१उवाऽ२३ ।
ईऽ२३४डा । शतभूमीः । उताऽ३१उवाऽ२३ । सीऽ२३४युः । हाहाऽ३१उवाऽ२३ ।
ईऽ२३४डा ॥ नत्वावज्रिन्त्सहस्र२ह्म् । रियाऽ३१उवाऽ२३ ॥ आऽ२३४नू ।
हाहाऽ३१उवाऽ२३ । ईऽ२३४डा । नजातम । ष्टरोऽ३ । आउ । वाऽ२३ ।
दाऽ२३४सी । हाहाऽ३१उवाऽ२३ ॥ इद्स्थिइडाऽ२३४५ । ❀

( दी० १० । प० २२ । मा० १३ )१( फि । १ )

( १।२ ) ॥ ह्रस्वावैरूपम् ।

यद्यावइन्द्रतेशतम् । ए । शतभूमीरुत । स्योवा ॥ नान्वाजिन् ।
सहस्र२सूरियाऽ२आनूऽ२ ॥ नाजाऽ२तमा ॥ ष्टरोऽ२३ । दाऽ२साऽ२३४औहोवा ॥
दिशंविश्व२हस् । अश्वाशिशुमतीऽ३ । इद्स्थिइडाऽ२३४५ ॥

( दी० १० । प० १२ । मा० ७ )२( फे । २ )

---

[साम-तन्त्र-सूत्राणि ][१]१ शौतावुदात्तादुनचे १३ १ १ हार् सचतापर १३ ३ २ प्नु २ १० ४
[२]२ साम्यभ्यरितनी १३ ६ १० ष्टरो तुते न दे कृष्टद्ध १३ १० ८

इडाइत्यत्र इकारस्य मात्रा नास्ति तद्विषय प्रमाणम् ।❀
व्यञ्जन यत्र मात्रा स्यात् स्थिते पर्वणि तत्पर ॥
स्वरो न पर्वमध्योऽपि त नेदर्शनामेर् इडा ॥ १ ॥

(१३) ॥ पञ्चनिधनं वैरूपम् ॥

यद्यावइन्द्रतेशतम् । ए । शतंभूमीरुत । स्योवा ॥ औवाऽ२ । हु९ऽ२ । हु९ऽ२ । हु९ऽ२ । औवाऽ३ । हाउवा । नत्वावजिन्त्सहस्र९सूर्याअनु । औवाऽ२ । हु९ऽ२ । (त्रिः) । औवाऽ३ । हाउवा । नजातमष्टरोदसी ॥ औवाऽ२ । हु९ऽ२ । (त्रिः) । औवाऽ३ । हाउवा । दिशंविश९हस् ॥ औवाऽ२ । हु९ऽ२ । (त्रिः) । औवाऽ३ । हाउवा । अश्वाशिशुमती । औवाऽ२ । हु९ऽ२ । (त्रिः) । औवाऽ३ ॥ हाउ(३)वाऽ३ । इट्स्थिइडाऽ२३४५ ॥ (दी० २३ । प० ३१ । मा० १० )३( ढौ । ३ )

(१४) ॥ षण्णिधनं वैरूपम् ॥

यद्यावइन्द्रतेशतम् । ए । शतंभूमीरुत । स्योवा ॥ हाउहाउहाउवा । नत्वावजिन्त्सहस्र९सूर्याअनु । हाउ(३)वा । नजातमष्टरोदसी । हाउ(३)वा । दिशंविश९हस् ॥* हाउ(३)वा ॥ अश्वाशिशुमती । हाउ(३)वा । युवतिश्वकुमारिणी । हाउ(३)वाऽ३ ॥ इट्स्थिइडाऽ२३४५ ॥ (दी० १५ । प० १६ । मा० २३ )४( पि । ४ )

(१५) ॥ सप्तनिधनं वैरूपम् ॥

यद्यावइन्द्रतेशतम् । ए । शतंभूमीरुत । स्योवा । हाउ(३)वा । नत्वावजिन्त्सहस्र९सूर्याअनु । हाउ(३)वा । नजातमष्टरोदसी । हाउ(३)वा । दिशंविश९हस् ॥ हाउ(३)वा । अश्वाशिशुमता । हाउ(३)वा । स्वः । हाउ(३)वा । ज्योतिः ॥ हाउहाउहाउवाऽ३ । इट्स्थिइडाऽ२३४५ ॥ ( दी० १५ । प० १८ । मा० २८ )५( वै । ५ )

(१६) ॥ अष्टा निधनं वैरूपम् ॥

यद्यावइन्द्रतेशतम् । ए । शतंभूमीरुत । स्योवा ॥ हाउ(३)वा । नत्वावजिन्त्सहस्र९सूर्याअनु । हाउ(३)वा । नजातमष्टरोदसी । हाउ(३)वा । दिशंविश९हस् ॥ हाउ(३)वा ॥ अश्वाशिशुमती । हाउ(३)वा । युवतिश्वकुमारिणी ॥ हाउ(३)वा । स्वः । हाउ(३)वा । ज्योतिः । हाउहाउहाउवाऽ३ ॥ इट्स्थिइडाऽ२३४५ ॥ ( दी० १७ । प० २० । मा० ३१ )६( ञा । ६ )

---

[साम-तन्त्र-सूत्राणि][३]३ रित तु न ञ १३ १ ६, शं व श्वा डा स्तोभाः १३.५.८, [४]४ दन्त्यादेशो मध्यमार्गे ये प्रत्यन्तरान् १३ २ ६, [५]५ शतायाम् ३ ४.४, [६]६ द्वन्द्व. पूर्व चान्तरसारिन १३.६.१,

* हाउ(३)वा= "हाउहाउहाउवा" इत्येवं स्तोभस्य त्रिवार पठनं सर्वत्र ज्ञातव्यम् ।

## २　पिबा सुतस्य । ( ऋ० ८ । ३ । १; सा० २३९ १४२१, आ० गे० ४०० ४०२ )

( ३।७ )　　　॥ द्वादश निधनं वैरूपम् ॥

यथावइन्द्रतेशतम् । ए । शतंभूमीरुत । स्योवा ॥ ओहहाउहाउ । ओहहाउवा ।
नत्वावज्रिन्त्सहस्र३सूर्याअनु । ओहाओहा । ओहाओहा । आहाओहा२३ ।
हाउवा । नजातमष्टरोदसी । ओहहाउहाउ । ओहहाउवा । दिशंविश३हस् ॥ ओहाओहा ।
ओहाओहा । ओहाओहा२३ । हाउवा ॥ अश्वाशिशुमतो । ओहहाउहाउ ।
ओहहाउवा । द्याः । ओहाओहा । ओहाओहा । ओहाओहा२३ । हाउवा ।
ज्योतिः । ओहहाउहाउ । ओहहाउवा । इडा । ओहाओहा । ओहाओहा । ओहाओहा२३ ।
हाउवा । इदस्थिइडा । ओहहाउहाउ । ओहहाउवा२३ ॥ हौ२३ । आ२३ । ऊ२३ ।
ई२३४५ ॥　　　( दी० ९८ । प० ४२ । मा० ३८ )७( दू । ७ )

( ३।८ )　　　॥ पुष्पम् वैरूपम् ॥

यथावइन्द्रतेशतम् । ए । शतंभूमीरुत । स्योवा ॥ हाओवा । (द्विः)। हुवे । हाओवा ।
हुवे । हाओ२३४वा । नत्वावज्रिन्त्सहस्र३सूर्याअनु । हाओवा । [ त्रिः ] । हुवे ।
हाओवा । [ द्वे द्विः ]। हुवे । हाओ२३४वा । नजातमष्टरोदसी । हाओवा ।( चतुः)।
हुवे । हाओवा । [ द्वे चतुः ]॥ नाजातमष्टरोदसाइ । एहोइ । आ२३४इही ।
(त्रीणिएवंचतुः)॥ हाओवा । (पञ्चकृत्वः) । हुवे । हाओवा । [ द्वे पञ्चकृत्वः]। हेहेहेहोवा२३ ।
हाउवा२३ ॥ ऊ२३४५ ॥　　　( दी० ११५ । प० ६३ । मा० ४४ )८( मीं । ८ )

( ३।९ )　　　॥ अन्तरिक्षे द्वे । द्वयोः प्रजापतिर्बृहतीन्द्रः ॥

हाउपिबासुता ॥ स्यरसि । नाः । औहोहोवा२ । इहा । मत्स्वानइन्द्रगोम ।
ताः । औहोहोवा२ । इहा । आपिर्नोबोधिसधमाद्ये । धाइ । औहोहोवा२ ।
इहा ॥ अस्मा२अ । वा । औहोहोवा२ ॥ इहा । तुताइ । धा२या२३४औहोवा ॥
सुष्टुभस्तुमोश्वाशिशुमका२३न् । इदस्थिइडा२३४५ ॥
( दी० २६ । प० २१ । म० १० ,९( कां । ९ )

[साम-तन्त्र-सूत्राणि][७]७ स्वर्गा ८ ५ ४,　[८]८ द्र० देव ० स्तोम ११ १० ९,　[९]९ द्र० चेतक ,
आत्मतपचमालये १३ २ ४, मिद्र० ऋद ७ ६ ७;

३ पवित्रं ते विततं० । ( ऋ० ९ । ८३ । १, स० ५६५,८७५, ग्रा० गे ११४२-४३ )

४ अभि त्वा पूर्वपीतये० । ( ऋ ८ । ३ । ७, स २५६,१५७३; ग्रा गे ४४२ )

( ३।२ )

पिबासुता ॥ स्यरसिनः । मात्स्वाऽ१नाईऽ२ । आ । औऽ३होवाहाउवाऽ३ ।
ईऽ३४डा । द्रुगोमतः । आपिनोंबोऽ२ । आ । औऽ३होवाहाउवाऽ३ ।
ईऽ३४डा । धिसधमाद्यवृधे ॥ आस्माऽ१अवाऽ२ । आ । औऽ३होवाहाउवाऽ३ ।
ईऽ३४डा ॥ तुताइ । धाऽ२याऽ२३४औहोवा ॥ विष्टुस्तुभोश्वाशिशुमक्राऽ३ेन् ।
ईद्रस्थिइडाऽ२३४५ ॥ ( दी० १५ । प० २० । म० ११ )१०( म । १० )

( ३।१ ) ॥ अरिष्टे द्वे । द्वयोः प्रजापतिर्जगती सोम देवा जगती ब्रह्मणस्पतिर्वा । ॥

हाह । होइया । [ द्वे त्रिः ]। पावी । त्रंताइ । विततांऽ३०म्र । ह्मणस्पाऽ२३४ताइ ॥
प्राभूः । गात्रा । णीऽ३परियाइ । पिवाइश्वाऽ२३४ताः ॥ आता । सवा ।
नूऽ३नैतदा । मोअश्नूऽ२३४ताइ ॥ शार्ता । सआइत् । वहन्तः । सम् ।
तदाशाऽ२३४ता । हाह । होइया । [ द्वे त्रिः ]॥ होइडा । (द्विः) । होऽ२३४५इ ॥ डा ॥

(३।२) ( दी० २६ । प० ३३ । मा० २२ )११( गा । ११ )

हाह । हौऽ३४५ । [ द्वे त्रिः ]। पावी । त्रंताइ । विततांऽ३०म्र । ह्मणस्पाऽ२३४ताइ ॥
प्राभूः । गात्रा । णीऽ३परियाइ । पिवाइश्वाऽ२३४ताः ॥ आता । सवा ।
नूऽ३नैतदा । मोअश्नूऽ२३४ताइ ॥ शार्ता । सआइत् । वहन्तः । सम् ।
तदाशाऽ२३४ता । हाह । हौऽ३४५ । [ द्वे त्रिः ]। हाइडा । (द्विः) । होऽ२३४५इ ॥ डा ॥

( दा० १४ । प० ३३ । मा० १६ )१२( दू । १२ )

( ४।१ ) ॥ अहरीते द्वे । द्वयोः प्रजापतिर्बृहतीन्द्रः ऋभुर्वा ॥

हाराभी ॥ त्वापूर्वपीत । याइ । इहाऽ३ । हाउवाऽ३ । वृऽ२३४हात् ।
इन्द्रास्तोमाइ । भिरायवाः । इहाऽ३ । हाउवाऽ३ । वृऽ२३४हात् ॥
समाइचीना । सऋभवाः । समाऽ२स्वरान् । इहाऽ३ । हाउवाऽ३ । वृऽ२३४हात् ॥
रुद्रागृणा । तपूर्वियाम् । इहाऽ३ । हाउवाऽ३ । वृऽ२३४हात् ॥ ए । वृहत् ॥

( दी० ८ । प० २४ । मा० १७ )१३( दे । १३ )

[साम-तन्त्र सूत्राणि][१०]१० [१२]१२ (पृथक् सूत्राणि न सन्ति) [११]११ याहाहोभ्ये हिगसु इम् १३ ६ २, इत्येत ५ ४ ६, स्येहारियन् ८ ४ ०, [१३]१३ स्ये ७ २ ५,

५ पिबा सुतस्य० । ( ऋ ८ । ३ । १, सा २३९,१४२१ ग्रा गे ४००-४०२ )

६ बृहदिन्द्राय गायत० । ( ऋ० ८ । ८९ । १ सा० २५८ ग्रा गे ४४४-४४५ )

---

( ४।२ )

अमीहाउ ॥ त्वापूर्वपीतयाइ । इह । हाऽ३१उवाऽ२३ । सूऽ२३४वाः ।
इन्द्रस्तोमेभिरायवाः । इह । हाऽ३१उवाऽ२३ । सूऽ२३४वाः । समी ।
चीनासऋभवस्समस्वरान् । इह । हाऽ३१उवाऽ२३ । सूऽ२३४वाः ॥
रुद्रागृणन्तपूर्वियाम् । इह । हाऽ३१ऊवाऽ२३ । सूऽ२३४वाः ॥ एऽ३ ।
सुवाऽ२३४५ः ॥ ( दी० ११ । प० २० । मा० १५ )१४( डु । १४ )

॥ चतुर्दश प्रथम खण्ड ॥ १ ॥

( ५।१ ) ॥ वरुणस्य देवस्थानम् । वरुणो बृहतीन्द्रः ॥

हाउपिबासुता ॥ स्यरसिनाऽ३ः । होइ । (त्रि) । हाउहाउहाउवा । सहोनरः ।
मरुत्वानइन्द्रगोमताऽ३ः । होइ । (त्रि) । हाउ(३)वा । सत्यमोजः । आपिर्नोबोधिसधमाऽ३ ।
होइ । (त्रि) । हाउ(३)वा । स्वर्ज्योतिः ॥ दियेवृधेऽ३ । होइ । (त्रि) । हाउ(३)वा ॥
पस्थादिदम् । (त्रि) । अस्मा२अनन्तुतेधियाऽ३ः । होइ । (त्रि) । हाउ(३)वा ॥
धारक्रान्भूमिरततनत्समुद्र२ममचूकुपत् । इट्भिधइडा२३४५ ॥

( दी० २२ । प० ३४ । मा० ४४ )१५( ढी । १५ )

( ६।१ ) ॥ बृहदेवस्थानम् प्रजापति बृहती मरुत ॥

हाउहाउहाउ । बृहात् । (त्रिः) । बृहत् । (त्रि) । बृहात् । (त्रि) । बृहदिन्द्रायऽ३गायाऽ१ताऽ२ ॥
मरुतोवृत्रऽ३हान्ताऽ१माऽ२म् ॥ येनज्योतिरजनयन्नृऽ३तावाऽ१द्धाऽ२ः ॥
देवन्देवायऽ३जागृऽ१वीऽ२३ । हाउहाउहाउ । बृहात् । (त्रिः) । बृहत् । (त्रि) ।
बृहात् । (त्रि) । बृहाऽ३१उ । वाऽ२ ॥ ए । बृहत् [ द्वे त्रिः ] ॥

( दा० १६ । प० ३१ । मा० २९ )१६( को । १६ )

---

[ साम-तन्त्र-सूत्राणि ][१४]१४ सुवर्भुवत् आनेशानाम् १२ ६ १ गुभि ७ १ २ [१५]१५ वेत नैताड़ातम् १३ ७ ६ उ४ वृ५शोभ मा ध५ गोचम् १२ ९ ३; हि २ ४ ५ [१६]१६ पत्रर्गजा स्पर्शान्तस्य १२ ६ ५

७　पुनानः सोम धारया० । ( ऋ० ९ । १०७ । ४; सा० ५११, ६७५, मा. गे. ९३८-९५२ )
८　अभि त्वा वृषभा० । ( ऋ. ८ । ४५ । २२, सा. १६१, ७३१, मा.गे. २८२-२८४ )

---

( ७।१ )　॥ ऐरयद्वैरिणे द्वे । वरुणो बृहती सोमः ॥

ऐरायाऽ२त् । (द्विः) । ऐरायाऽ२३त् । सुवराऽ३४ । हाहोइ । पुनानःसोमऽ२धाराऽ१याऽ२ ॥
अपोवसानोऽ२आर्षाऽ१सीऽ२ ॥ आरत्नधायोनिमृतस्यऽ२साइदाऽ१सीऽ२ ॥
उत्सोदेवोहिऽ२राण्याऽ१याऽ२ः । ऐरायाऽ२त् । (द्विः) । ऐरायाऽ२३त् ।
सुवराऽ३४ । हाहाऽ३४ । ओहोवा ॥ एऽ३ । देवादिवाज्योतीऽ२३४५ः ॥
( दी० २५ । प० १७ । मा० ११ )१७( फ । १७ )

( ८।१ )　॥ वरुणो गायत्रीन्द्रः ॥

हावोवोहाउ । अभित्वावापोऽ३भासुताइ । अभित्वावा । पाभासुताइ ।
अभित्यावापोऽ३भासुताइ ॥ औहोहावोहोऽ२ । सुतꣳसृजामीऽ३पीतयाइ ।
सुतꣳसृजा । मीपीतयाइ । सुतꣳसृजामीऽ२पीतयाइ ॥ हावोहोहाउ । तृंपाविपाश्नूऽ३हीमदाम् ।
तृंपाविया । श्नूहीमदाम् । तृम्पावियाश्नूऽ३हीमदाम् ॥ औहोहावोहोऽ२ ।
उहुवाऽ३हाउ । वाऽ३ ॥ हस् ॥　( दी० ३४ । प० १९ । मा० १३ )१८( धि । १८ )

( ७।१ )　॥ आङ्गिरसे द्वे । अंगिरा बृहती सोमः ॥

हाउहाउहाउ । हौवाओऽ२३४वा । हाहाऽ३१उवाऽ२ । पुनानःसोमधारया ।
श्रवोवृहद्दिहाइडा ॥ अपोवसानोअर्षसि । श्रवोवृहद्दिहाइडा ॥ आरत्नधायोनिमृतस्यसीदसि ।
श्रवोवृहद्दिहाइडा ॥ उत्सोदेवोहिरण्ययः । श्रवोवृहद्दिहाइडा । हाउहाउहाउ ।
हौवाओऽ२३४वा । हाहाऽ३१उवाऽ२ ॥ सुवर्जगन्महस्पृथिव्यादिवमाशकेमयाजिनोयमम् ।
हस् । इड्स्धिइडाऽ२३४५ ॥　( दा० ३९ । प० १७ । मा० १९ )१९( धो । १९ )

---

[साम-तन्त्र-सूत्राणि][१७]१७ स्यैनेयद्वतिव रे ४ ८.१　[१८]१८ तृणं ११.१०.७,　[१९]१९ न पुनाना०सचु १३.१.२; पुना ८.५.१।

९ तवेदिन्द्रावमं वसुत्वम्० । ( ऋ० ८ । ११ ७, सा. २७०, ग्रा. गे. ४६६ )

१० आ त्वा सहस्रमा शतम्०।( ऋ ८ । १ । २४, सा० २४१,१३४१, ग्रा. गे ४१३ ४१४ )

११ शं नो देवीरभिष्टये० । ( ऋ० १० । ९ । ४, सा. ३३, ग्रा. गे. ५२-५३ )

(९।१ ) ॥ आङ्गिरसे द्वे ( तत्रोत्तरम् ) ।

ओहोवाओहोवाओहोऽ३वा । तवेदिन्द्रावमंवसु॥ त्वंपुष्यसिमध्यमम् ॥
सत्राविश्वस्यपरमस्यराजसि॥ नकिष्ट्वागोषुवृण्वते । ओहोवाओहोवाओहोऽ३वा ॥
सुवर्जगन्मदेवानामवसावयंशकमवाजिनोयमम् । सुवर्जगन्ममहस्पृथिव्यादियमा ।
हसा्स्थिवृहन्नमाऽ२३४५ः ॥

( दी० ३० । प० ९ । मा० ८ )२०( मैं । २० )

(९।२ ) ॥ बार्हस्पत्यम् । बृहस्पतिर्बृहतीन्द्र ॥

ओहोओहोऽ३वा । (त्रिः)। इडाऽ२३भिराऽ३४ । ओहोवा । तवेदिन्द्रावमंवसु ॥
त्वंपुष्यसिमध्यमम्॥ सत्राविश्वस्यपरमस्यराजसि॥ नकिष्ट्वागोषुवृण्वते ।
ओहोओहोऽ३वा । (त्रिः) । इडाऽ२३भिराऽ३४ । ओहोवा ॥ इडासुवोबृहन्नमाऽ२३४५ः ॥

( दी० ३१ । प० १५ । मा० ८ )२१ ( डै । २१ )

( १०।१ ) ॥ भारद्वाजम् । भरद्वाजो बृहतीन्द्रः ॥

हाउहाउहाउ । ओहोआत्वासहस्रमाशताम् ॥ हाउहाउहाउ । युक्ताराऽ१थाऽ२३इ ।
हाउहाउहाउ । हिरण्याऽ१याऽ२३इ । हाउहाउहाउ । ब्रह्मायूऽ१जाऽ२३ः ॥
हाउहाउहाउ । हारयइ । इन्द्राइशाऽ१इनाऽ२३ः॥ हाउहाउहाउ । वहान्तूऽ१सोऽ२३ ॥
हाउहाउहाउ । मपीऽ३ । ताऽ२३४याइ । उहुवाऽ६हाउ । वा॥ इस् ॥

(दी० २६ । प० १९ । मा० ११ )२२ ( घि । २२ )

(११।१) ॥ आथर्वणम् । अथर्वा गायत्री आप० ॥

उहुवाओहा । ओहोना । शन्नोदेवीः॥ उहुवाओहा । ओहोवाहाउ । वा । आवद् ।
अभिष्टाऽ२३याऽ२३इ॥ उहुवाओहा । ओहोवा । शन्नोभवा॥ उहुवाओहा ।
ओहोवाहाउ । वा । सवः । तुपीताऽ२३याऽ२३इ॥ उहुवाओहा ।
ओहोवा । शंयोरभी॥ उहुवाओहा । ओहोवाहाउ । वा । ज्योतिः ।
स्रवन्तूऽ२३नाऽ३ः । उहुवाओहा । ओहोवाहाउ । वाऽ३॥ ईऽ२३४५ ॥

( दी० ४३ । प० २८ । मा० १८ )२३( हू । २३ )

[साम-तन्त्र-सूत्राणि][२०]२०[२१]२१[२२]२२ ( पृथक् सूत्राणि न सन्ति ) [२३]२३शाखायनसुहि १३. ११ ६

शयुर्बार्हस्पत्य । इन्द्र । प्रगाथ । ( ऋ० ६ । ४६ । ५ )

इन्द्र ज्येष्ठं न आ भर ओजिष्ठं पपुरि श्रवः ।
येनेमे चित्र वज्रहस्त रोदसी ओभे सुशिप्र प्राः ॥ ५८६ ॥

१२ इन्द्र ज्येष्ठं न आ भर ओजिष्ठं पुपुरि श्रवः ।
यद्दिधृक्षेम वज्रहस्त रोदसी ओभे सुशिम पप्राः ॥ ५८६ ॥

१३ कया नश्चित्रः । ( ऋ ४ । ३१ । १, मा १६६,६८२, ग्रा. गे २०४-२०६ )

---

( १२।१ ) ॥ नारद्सवम् । नरद्सुर्बृहतीन्द्र ॥

हाउहाउहाउ । औंहोइन्द्रज्येष्ठन्नआभराऽ३ए ॥ हाउहाउहाउ । औंहोऽ२ । ओऽ२ । जिष्ठंपूपारा । औंहोवाश्रवाः ॥ हाउहाउहाउ । औंहोऽ२ । याऽ२त् । दिधृक्षेमाव । जहस्त । औंहोवारोदासी ॥ हाउहाउहाउ । औंहोऽ२ । ओऽ२ । भेसुशाइप्रा । औंहोनापाप्राः । हाउहाउहाउ । औंहोऽ२ । ओऽ२ । उहुवाऽ३हाउ । वाऽ३ ॥ हस् ॥ ( दी० ३६ । प० २४ । मा० १८ )२४( धी । २४ )

( १३।१ ) ॥ बृहती वामदेव्ये द्वे । वामदेवो गायत्रीन्द्र ॥

हाउहाउहाउ । बृहद्वामम् । (त्रिः) । बृहत्पार्थिवम् । (त्रिः) । बृहदन्तरिक्षम् । ( त्रिः ) । बृहद्दिवम् (त्रिः)। बृहद्वामम्।(त्रिः)। कयानश्चित्रऽ२आभूऽ१वाऽ२त्॥ ऊतीसदावृऽ३धाःसाऽ१खाऽ२॥ कयाशचिष्ठऽ२यावाऽ१ताऽ२३ ॥ हाउहाउहाउ । बृहद्वामम् । (त्रिः) । बृहत्पार्थिवम् । (त्रिः) । बृहदन्तारिक्षम्।(त्रिः)। बृहद्दिवम्। (त्रिः)। बृहद्वामम् । (द्विः)। बृहद्वामम्। औंहोवाहाउ । वा ॥ ए। बृहद्वामम् । ए । बृहद्यावामम् । ए । वामेभ्यानामम् । ए । वामम् ॥ वामम् । वामम् ॥ ( दा० ४१ । प० ४७ । मा० ४५ )२५( फु । २५)

( १३।२ )

बृहद्वामम् । (त्रिः) । कयानश्चाइ । त्रआऽ२भूऽ२३४वात् ॥ ऊताइसदा । वाद्धःसाऽ२३४खा ॥ कयाशचाइ । ष्ठयाऽ२याऽ२३४ताँ । बृहद्वामम् । (द्विः) ॥ बृहत् । वामाऽ३उवा । ए । बृहद्वामम् ॥ [ द्वे त्रिः ]॥ ( दा० १० । प० १९ । मा०१५ )२६ ( भ्रु । २६ )

---

[ साम-तन्त्र-सूत्राणि ][२४]२४ इणपरे पोरान्तिलोपश्च १३ ११,१४, पु प्रथमे ८५७,
[२५]२५[२६]२६ ( पृथक् सूत्राणि न सन्ति )

१४ त्वामिद्धि हवामहे० । ( ऋ. ६ । ४६ । १; सा. २३४,८०९; ग्रा गे. ३७९-३८० )

१५ इन्द्रं नरो नेमधिता० । ( ऋ. ७ । २७ । १, सा. ३१८; ग्रा. गे ५४० )

१६ स्वादिष्ठया मदिष्ठया० । ( ऋ० ९ । १ । १, सा. ४६८, ६८९; ग्रा. गे. ८२७-८३० )

---

( १४।१ ) ॥ भरद्वाजस्य बृहत्साम भरद्वाजो बृहतीन्द्रः ॥

ओहोइत्वामिद्धिहवामहाऽ३ए ॥ सातौवाजा । स्याकाराऽ२३४वाः । तुवाऽ३४ ।
आहोवा । वृत्राइष्वाइ । द्रासाऽ३१त् । पतिन्नाऽ२३४राः ॥ त्वांकाष्ठाऽ३४ ।
आहोवा ॥ सूऽ२आर्वाऽ२३४ । ताऽः । उहुवाऽ६हाउ । वा ॥ हस् ॥

( दी० १३ । प० १५ । मा० ११ )७( ग । २७ )

॥ त्रयोदश द्वितीय खण्ड. ॥ २ ॥

॥ इति (ग्रामे) आरण्यगाने प्रथमस्यार्द्ध प्रपाठकः ॥

( १५।१ ) ॥ वसिष्ठजमदग्न्योरर्कौ द्वावगस्त्य-जमदग्न्योर्वा वसिष्ठस्त्रिष्टुबिन्द्र ॥

इयाऽ३होइ । (त्रिः) । इन्द्रन्नरो । नेऽ३माधि । ताहयन्ताइ ॥ यत्पारियाः । युनज ।
ताइधियस्ताः ॥ शूरोनृषा । ताऽ३श्रव । सश्चकामाइ ॥ आगोमताइ । व्रजम ।
जातुवन्ताः । इयाऽ३होइ । (त्रिः) । इयाऽ३होऽ२ । याऽ२३४औहोवा ॥ ईऽ२३४५ ॥

( दी० ११ । प० २० । मा० १३ )१( ड्रि । २८ )

( १५।२ ) ॥ जमदग्निस्त्रिष्टुबिन्द्र ॥

ओहोइया । (त्रिः) । इन्द्रन्नरो । नेऽ३मधि । ताहयन्ताइ ॥ यत्पारियाः । युनज ।
ताइधियस्ताः ॥ शूरोनृषा । ताऽ३श्रव । सश्चकामाइ ॥ आगोमताइ ।
व्रजम । जातुवन्ताः । ओहोइया । (त्रिः) । ओहोऽ३४५याऽ६५६ ॥ ईऽ२३४५ ॥

( दी० २५ । प० १९ । मा० १२ )२( आ । २९ )

( १६।१ ) ॥ स्वाशिरामर्कः स्वाशिरा गायत्री सोमेन्द्रौ ॥

अयामायाम् । अयामायाम् । अयामायाम् । स्वादिष्ठयाऽ२ । मदाइष्ठाऽ२३४५या ॥
पवस्वसोऽ२ । मधाराऽ२३४या ॥ इन्द्रायपाऽ२ । तवाइसूऽ२३४ताः ॥
अयामायाम् । अयामायाम् । अयाम् । आऽ२ । याऽ२३४ । औहोवा ॥ ईऽ२३४५ ॥

( दी० १० । प० १६ । मा० ९ )३( प्रो । ३० )

---

[ साम-तन्त्र-सूत्राणि ][२७]२७ [२९]७ (पृथक् सूत्राणि न सन्ति )  [२८]१ स्ये ७ ११ १;
[३०]१ भोऽयम् ६.५.१०; वधी ८.४.५.

१७ धर्ता दिवः पवते० । ( ऋ ९ । ७६ । १ सा ५५८, १२२८६ प्र गे० ११०७ ११०८ )

१८ प्र व इन्द्राय बृहते० । ( ऋ ८ । ८९ । ३, सा २५७, ग्रा ग ४४३ )

१९ अग्निर्मूर्धा दिवः० । ( ऋ० ८ । ४४ । १६ सा २७, १५३२ ग्रा ग ८६ )

( १७।१ ) ॥ दीर्घतमसोऽर्के दीर्घतमा जगती सोम ॥

हाउहाउहाउ । औहोवाएहियाहाउ । धार्ता । दाइव:पवतेकृत्वियः । रसोरमो ।
रसः ॥ हाउहाउहाउ । औहोवाएहियाहाउ । दाक्षाः । दाइवानामनुमादियः ।
नृभीर्नृभीः । नृभीः ॥ हाउ(३) । औहोवाएहियाहाउ । हारीः । साजानोअत्योनस ।
त्वभीस्त्वभीः । त्वभीः ॥ हाउ(३) । औहोवाएहियाहाउ । वार्था । पाजा॰सिकृणुपनदी ।
पुवापुवा । पुवा । हाउ(३) । औहोवाएहियाऽ३हाउ । वाऽ३ ॥ ईऽ२३४५ ॥

( दी० ५३ । प० २८ । मा० ३७ )४( डू । ३१ )

( १८।१ ) ॥ मरुतामर्कौ द्वौ मरुतो बृहती मरुत ॥

हाउहाउहाउ । प्रवइन्द्रायबृहाताइ । हावाइ । (द्वि)॥ हाउ(३) । मरुतोब्रह्मअर्चाता ।
चाता । चाता ॥ हाउहाउहाउ । वृत्र॰हनतिवृत्रहाशतक्रातुः । क्रातुः । क्रातुः ॥
हाउ ३) । वज्रेणशतपर्वाणा । र्वाणा । वोणा । हाउ(३)। वाऽ३ ॥ इट्स्थिइडाऽ२३४५ ॥

( दी० १६ । प० १९ । मा० २४ )५( धी । ३२ )

( १८।२ ) ॥ मरुतां सस्तोभ मरुतो बृहती मरुत ॥

हाउहाउहाउ । सन्त्यानोनवुः । (त्रि) । अनोनवुः । (त्रि) । मरुतः । (त्रि) । विश्वस्मात् । (त्रि) ।
प्रवइन्द्रायबृहाताइ । हावाइ (द्वि)॥ मरुतोब्रह्मअर्चाता । चाता । चाता ॥
वृत्र॰हनतिवृत्रहाशतक्रातुः । क्रातुः । क्रातुः ॥ वज्रेणशतपर्वाणा । वोणा । वोणा ।
हाउहाउहाउ । सन्त्यानोनवुः । (त्रि) । अनानवुः । (त्रि) । मरुतः । (त्रि) । विश्वस्मात् । (द्वि)
वाइश्वस्माऽ२३४औहोवा ॥ ईऽ२३४५ ॥ ( दी० २५ । प० ३१ । मा० ३९ )६( श्रो । ३३ )

( १९।१ ) ॥ अग्नेरर्कं अग्नि गायत्र्यग्नि ॥

होहोवा । ई । ईया । ( त्रीणि त्रिः ) । अग्निमूर्द्धादिऽ३वाःकाऽ१कुऽ२त् ॥
पति पृथीविऽ३याआऽ१याऽ२म् ॥ अपा॰रता॰सिऽ३जाइन्वाऽ१तीऽ२ ॥
होहोवा । ई । ईया । (त्रीणि द्वि) । होहोवा । ई । ईऽ२ । याऽ२३४ ।
ओहावा ॥ ए । अग्निर्मूर्द्धामवद्दिवः ॥ ( दी० ११ । प० १५ । मा० ५ )७( डु । ३४ )

[साम-तन्त्र-सूत्राणि][३१]४ एपस्येमानि ५ ५ ४, स्य पचिया ५ १ ० २ [३२]५ उ नजा १ ५ ८।
[३३]६ र व्या १२ ४ ९ [३४]७ औ ३ ७ ६

वासिष्ठो मैत्रावरुणि । इन्द्र । त्रिष्टुप् । ( ऋ० ७।२७।३ )

इन्द्रो राजा जगतश्चर्षणीनामधि क्षमि विषुरूपं यदस्ति ।
ततो ददाति दाशुषे वसूनि चोदद्राध उपस्तुतश्चिदर्वाक् ॥ ५८७ ॥

२० अयं पूषा रयिर्भगः० । ( ऋ ९ । १०१ । ७; सा. ५४५, ८१८; आ ग १०६२-१०६४ )

२१ इन्द्रो राजा जगतश्चर्षणीनामधिक्षमा विश्वरूप यदस्य ।
ततो ददाति दाशुषे वसूनि चोदद्राध उपस्तुतं चिदर्वाक् ॥ ५८७ ॥

---

(१०।१) ॥ प्रजापतेरर्के प्रजापतिरनुष्टुप् द्यावापृथिवी ॥

होवा । ईया । औऽ२३हाओऽ३ । आयाम् । पूषाऽ२ । रयिर्भाऽ२३४गाः ॥
सोमाः । पुनाऽ२ । नाअर्षाऽ२३४ती ॥ पातीः । विश्वाऽ२ । स्यभूमाऽ२३४नाः ॥
वाया । ख्यद्रोऽ२ । दसीऊऽ२३४भाइ । होवा । ईया । औऽ२३हाओऽ३४ ।
ओहावा ॥ ईऽ२३४५ ॥ ( दी० ६ । प० २० । मा० १० )८( डौ । ३५ )

( ११।१ ) ॥ इन्द्रस्यार्कौ द्वौ इन्द्रस्त्रिष्टुबिन्द्र ॥

हावीन्द्राः ॥ राजा । जगतः । चर्षणीनाम् । नाम् । नाम् । नाओइनम् । (त्रि) ।
नाहोइनम् ।(त्रि)। हावोहोहाउ । अधिक्षमा । विश्वरू । पयदस्या । स्या । स्या ।
स्याओइनम् । (त्रि)। स्याहोइनम् ।(त्रि । औहोहावोहोऽ२॥ ततोददा ।
तीऽ२दाशु । षाइवसूनी । नी । नी । नाओइनम् । (त्रि)। नाहोइनम् ।(त्रि)।
हावोहोहाउ ॥ चोदद्राधाः । उपस्तु । तंचिदर्वा । र्वा । र्वा । र्वाओइनम् । (त्रि) ।
र्वाहोइनम् ।(त्रि)। औहोहावोहाऽ३ । हाउवाऽ३ ॥ ईऽ२३४५ ॥

(११।२) ( दी० ६६ । प० ५१ । मा० ७० )९( मौ । ३६ )

इन्द्रोहाउ ॥ राजा । जगतः । चर्षणीनाम् । नाम् । नाम् । नावा । (त्रि) ।
नोवाहाइ ।(त्रि)। हाओऽ२ । हाऽ२हाउ । अधिक्षमा । विश्वरू । पयदस्या ।
स्या । स्या । स्यावा ।(त्रि)। स्यावाहाइ । त्रि)। हाओऽ२ । हाऽ२हाउ ॥
ततोददा । तीऽ२दाशु । षाइवसूनी । नी । नी । नावा । (त्रि) । नोवाहाइ । (त्रि) ।
हाओऽ२ । हाऽ२हाउ ॥ चोदद्राधाः । उपस्तु । तंचिदर्वा । र्वा । र्वा ।
र्वावा ।(त्रि)। र्वोवाहाइ । (२) हाओऽ२ । हाऽ२हाउ । वाऽ३ ॥ ईऽ२३४५ ॥

( दी० ७२ । प० ५५ । मा० २७ )१०( फ्रे । ३७ )

---

[ साम-तन्त्र-सूत्राणि ][३५]८ ( पृथग सूत्रणि न सन्ति ) [३६]९ ह उवागाम् ४ ७ १०, च र र्वे ४ ११ ६
[३७]१० उदु ■ ६ ५ १ इदस्य ७ १० १० तर १२ ३ ६,

शुनःशेप आजीगर्तिः, कृत्रिमो देवरातो वैश्वामित्रो वा । वरुणः । त्रिष्टुप् । ( ऋ० १।२४।१५ )

उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्रथाय ।
अथा वयमादित्य व्रते तवानागसो अदितये स्याम ॥ ५८९ ॥

॥ वामदेवो गौतम । इन्द्र । गायत्री । ( न ऋग्वेदीयः )

२२ यस्येदमा रजोयुजस्तुजे जने वनं स्वः ।
इन्द्रस्य रन्त्यं बृहत् ॥ ५८८ ॥

२३ उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्रथाय ।
अथादित्य व्रते वयं तवानागसो अदितये स्याम ॥ ५८९ ॥

---

(२०।१) ॥ अर्कशिरः अर्को गायत्रीन्द्रः ॥

हाउयास्या॥ इदमारजोयूऽ१जाऽ२ः॥ तुजेजनेवना२स्वूऽ१वाऽ२ः॥ आइन्द्रस्याऽ२३४५राऽ६५६॥
तिर्यंबृहत् ॥　　　　( दी० ३ । प० ५ । म० ५ )११( शु । ३८ )

(१) ॥ अर्कग्रीवाश्च अर्को यजुरर्कः ॥

पातीऽ२ः ।(त्रि)। दिवओ॥ पातीऽ२ः ।(त्रि)। अन्तरिक्ष । स्या । पातीऽ२ः । (त्रिः) ।
पार्थिव । स्या॥ पातीऽ२ः (त्रि)। अपामोषधी । नाम्॥ पातीऽ२ः । (त्रिः) । विश्वस्यभूव ।
स्या । पाताऽ२ः । पातीऽ२३ः । पाऽ२ । ताऽ२३४ । औहोवा॥ ए । पतिर्दिवः ।
ए । पतिरन्तरिक्षस्य । ए । पतिःपार्थिवस्य । ए । पतिरपामोषधीनाम् ।
ए । पतिर्विश्वस्यभूतस्य । ए । सुरर्ज्योतीऽ२३४ः॥ ( दी० २० । प० ४१ । मा० २२ )१२(पा ।३९)*

(२३।१) ॥ वरुणगोतमयोरर्कः वरुणगोतमौ त्रिष्टुप् वरुणादित्यौ ॥

हाउहाउहाउ । आयुश्चक्षुर्ज्योतिः । औहोवा । इया । उदुत्तमंवरुणपाशमाऽ२३स्मात्॥
अवाधमंविमध्यम२श्रथाऽ२३या॥ अथादित्यव्रतेवयंताऽ२३वा ॥
अनागसोअदितयेमियाऽ२३माऽ३ । हाउहाउहाउ । आयुश्चक्षुर्ज्योतिः ।
औहोवा । ईऽ२ । याऽ२३४ । औहोवा॥ ईऽ२३४५ ॥( दी० ०१ । प० १५ मा० १० )१३( डौ । ४० )

*॥ अस्य मूलं न ऋक्, अपि तु स्तोभः स चैवः—(स्तोमपदे १-६०)

(१)पतिः । दिवः । अन्तरिक्षस्य । पार्थिवस्य । अपाम् । ओषधीनाम् ।
ओष । धीनाम् । विश्वस्य । भूतस्य ॥

---

[ साम-तन्त्र-सूत्राणि ][३८]११ मार्कण्डेऽचतुर्थे १३. २ १०,　　[३९]१२ ( पृथक् सूत्राणि न सन्ति )
[४०]१३ रादि पञ्चस्वर मिवत् ११ ४,

२४ इन्द्रं नरो नेमधिता० । ( ऋ० ७ । २७ । १, सा० ३१८, मा ने ५४० )

२५ मूर्धानं दिवो अरतिं० । ( ऋ० ६ । ७ । १, सा. ६७, ११४०, मा० गे. १०६-११० )

( १४।१ ) ॥ अर्कपुष्पे द्वे प्रजापतिस्त्रिष्टुबिन्द्रः ॥

इय । होइ । इयइयईऽ३या । ( त्रीणि त्रिः ) । इन्द्रन्नरो । नेऽ३मधि ।
ताइवताइ ॥ यत्पारियाः । युनज । ताइधियस्ताः ॥ शूरोनृषा । ताऽ३श्रव ।
सश्चकामाइ । आगोमताइ । व्रजेभ । जातुवन्नाः । इय । होइ । इयइयईऽ३या । ( त्रीणि द्विः )
इय । होइ । इयइय । ईऽ२ । याऽ२३४ । औहोवा ॥ ईऽ२३४५ ॥

(१४।२) ( दी० ११ । प० ३८ । मा० २४ )१४( प्री । ४१ )

उव । होइ । उवउवऊऽ३वा । ( त्रीणि त्रिः ) । इन्द्रन्नरो । नेऽ३मधि ।
ताइवन्ताइ ॥ यत्पारियाः । युनज । ताइधियस्ताः ॥ शूरोनृषा । ताऽ३श्रव ।
सश्चकामाइ ॥ आगोमताइ । व्रजेभ । जातुवन्नाः । उव । होइ । उवउवऊऽ३वा ।( त्रीणि द्विः )
उव । होइ । उवउव । ऊऽ२ । वाऽ२३४ । औहोवा ॥ ईऽ२३४५ ॥

( दी० ११ । प० ३४ । मा० २४ )१५( प्री । ४२ )

॥ पयद्यारतृतीय गण्ड ॥ ३ ॥

( १५।१ ) ॥ ज्येष्ठ साम आज्यदोहम् अग्निर्वैश्वानरस्त्रिष्टुबग्निर्वैश्वानर ॥

हाउहाउहाउ । आज्यदोहम् ।(त्रि )। मूर्द्धानन्दाइ । वाऽ३अर । तिपृथिव्याः ॥
वैश्वानराम् । ऋतआ । जातमग्नीम् ॥ कविंश्सम्रा । जाऽ३मति । थिजनानाम् ॥
आसन्नःपा । त्राऽ३०जन । यन्तदेवाः । हाउ(३) । आज्यदोहम् । ( द्विः ) ।
आज्यदोऽ५हाउ । वा ॥ ए । आज्यदोहम् । ( द्वे द्विः ) । ए । आज्यदोहऽ२३४५म् ॥

( दी० १२ । प० २७ । मा० २१ )१६( छि । ४३ )

( १५।२ ) ॥ ईनिधनमाज्यदोहम् । ( इति वैदिकसङ्केतः ) ॥

हाउहाउहाउ । हिम्स्थिचिदोहम् । चिदोहम् । चिदोहम् । मूर्द्धानन्दाइ । वाऽ३अर । तिपृथिव्याः ॥
वैश्वानराम् । ऋतआ । जातमग्नीम् ॥ कविंश्सम्रा । जाऽ३मति । थिजनानाम् ॥
आसन्नःपा । त्राऽ३०जन । यन्तदेवाः । हाउहाउहाउ । हिम्स्थिचिदोहम् ।
चिदोहम् । चिदोऽ३हाउ । वाऽ३ ॥ ईऽ२३४५ ॥ ( दी० १७ । प० २२ । म० २२ )१७( स्त्रा।४४ )

[साम-तन्त्र-सूत्राणि][४१]१४[४२]१५[४३]१६[४४]१७ ( पृथक् सूत्राणि न सन्ति )

२६ सुरूपकृत्नुमूतये० । ( ऋ० १ । ४ । १; सा. १६०,१०८७; ग्रा. गे. २७८-२८१ )

२७ पिबा सोममिन्द्र० । ( ऋ. ७ । २२ । १; सा. ३९८, ९२७; ग्रा. गे. ६९३-६९४ )

२८ स्वादोरित्था विषूवतः० । ( ऋ. १ । ८४ । १०; सा. ४०९,१००५; ग्रा. गे. ७१३ )

---

( २५।३ ) ॥ ऋत-निधनमाज्यदोहम् । ( इति वैदिकसंकेतः ) ॥

हाउ(३) । च्योहम् । (त्रिः) । मूर्द्धानन्दाइ । वाऽ३अर । तिपृथिव्याः ॥
वैश्वानराम् । ऋतआ । जातमग्नीम् ॥ कविंश्सम्रा । जाऽ३मति । थिजनानाम् ॥
आसन्नःपा । त्राऽ३०जन । यन्तदेवाः । हाउ(३) । च्योहम् । (द्विः) । च्योऽ३हाउ ।
वाऽ३ ॥ एऽ३ । ऋतम् ॥ ( दी० १५ । प० २३ । मा० २१ )१८( व । ४५ )

( २६।१ ) ॥ रुद्रस्य त्रय ऋषभाः, तत्रेदं प्रथमं रैवतऋषभ रुद्रो गायत्री प्रजापतिः ॥

सुरूपकृत्नुमूतये। (त्रिः)। सुदुघामिवगोदुहे । जुहूमसाइ ॥ द्यविद्यवाइ ॥ (द्विः) ।
द्यविद्यवाऽ३१उ । वाऽ२३ ॥ उम् । (त्रि) ॥ ( दी० १५ । प० १२ । मा० ७ )१९( फे । ४६ )

( २७।१ ) ॥ वैराजऋषभमिदं द्वितीयम् रुद्रो विराडिन्द्रः ॥

हाउहाउहाउ । आइही । (त्रिः) । आइ । (त्रिः) । इयाहाउ । (त्रिः) । पिबासोमाम् ।
इन्द्र । मन्दतुत्वा ॥ यन्तेसुपा । वाऽ३हरि । अश्वअद्रीः ॥ सोतुर्बाहू । भ्याऽ३४सुय । तोनअर्वा॥
हाउ(३) । आइही ।(त्रि.)। आइ।(त्रिः)। इयाहाउ।(द्वि.)। इयाऽ३हाउ।वाऽ३ ॥ ईऽ२३४५॥
( दी० १२ । प० ३१ । मा० २८ )२०( त्रे । ४७ )

( २८।१ ) ॥ शाकरऋषभमिति तृतीयम् रुद्र-पङ्क्तिरिन्द्रः ॥

ओऽ३१म् ।(त्रिः)। स्वादोरइत्थाएविपूएवतआ । शंयोः । शंयोः ॥ मधोरपिबाएन्तिगोएरियआ ।
हविः ।(द्विः)। याआएन्द्रेणाएसयाएवरिया । सुवः॥(द्विः)। वृष्णाएमदाएन्तिशोएभमथाआ ।
ज्योतिः॥(द्विः)। वस्वीरअनूएस्वराएजियमा । ओऽ३१म् ।(द्विः)। ओऽ३१२३४ ।
वा ॥ इद्दियइडाऽ२३४५ ॥ ( दी० ३८ । प० २१ । मा० ३२ )२१( टा । ४८ )

---

[साम-तन्त्र-सूत्राणि ][४५]१८ [४७]२० ( पृथक् सूत्राणि न सन्ति ) [४६]१९ श्री ९.५.८.
[४८]२१ शाकोयवरेजा ११.९.५; दः ९.२.७; मौः १२.२.१०.

(२६।१) द्यविद्यवाइ-इति मध्यमोऽभ्यासःप्रतिहारः ॥ प्रतिहारसू० १.११ १२;
(२८।१) भक्तिविभाग प्रतिहारसूत्रभाष्ये स्पष्टः ॥ प्रतिहारसू० १ ११ १४,

२९ पुरोजिती वो अन्धसः० । ( ऋ० ९ । १०१ । १; सा० ५४५, ६९७ ग्रा गे १०५६ १०६१ )
३० असाव्य१शुर्मदाय० । ( ऋ ९ । ६२ । ४, सा ४७३, १००८, ग्रा गे. ८६५ ८७० )
३१ , अभी नवन्ते अद्रुहः० । ( ऋ० ९ । १०० । १, सा ५५०, ग्रा गे १०८०-१०८२ )

( २९।१ ) ॥ अतीषंगाणि त्रीणि, इन्द्रस्य त्रयोऽतीषंगा , अथापर रौद्र- रुद्र इन्द्रोनुष्टुप् गायत्री सोम ॥
एपुरोजिती ॥ वोअन्धसस्सुतायमादयाऽ२इत्नवाइ । इडा ॥ ऊवा ॥ तजातमाऽ२न्धसः । ।
अथा ॥ दाइर्यो ॥ सद्मियाऽ२ददाइ । अथा ॥ ऊग्रम् ॥ शर्ममहाऽ२इश्रवाः ।
अथा । अपश्वान१श्नथाऽ१इष्टाऽ३ना ॥ सखायोदीर्घजाऽ२३होइ ॥ ह्वायमाऽ३१उवाऽ२३ ॥
इड्स्थिइडाऽ२३४५ ॥ ( दी० १२ । प० १६ । मा० १३ )२१( चि । ४९ )

( ३०।१ ) ॥ वासव- इन्द्रस्त्रिष्टुप् गायत्री सोमश्येनी ॥

एआसा ॥ जिवकारध्येयथाऽ२जाउ । इडा ॥ आसा ॥ व्य१शुर्मदाऽ२या ।
अथा ॥ धाया ॥ मनोताप्रथमामनाऽ२इषा । इडा ॥ आप्स्न ॥
दक्षोगिराऽ२इष्ठाः । अथा ॥ दाशा ॥ स्वसारोअधिसानोऽ२अव्याइ ।
इडा ॥ श्याइनो ॥ नयोनिमाऽ२सदात् । अथा ॥ मार्जो ॥ तिरोह्वि१सदनेपुवाऽ२च्छाऽ३१उ ।
वाऽ२३ ॥ इड्स्थिइडाऽ२३४५ ॥ ( दी० ११ । प० २० । मा० १० )२३( खा । ५० )

( ३१।१ ) ॥ पार्जन्यो वैश्वदेवो वा इन्द्रोऽनुष्टुप् गायत्री सोमेन्द्रौ ॥

एआमी ॥ नवन्तआऽ२ । द्रुहआऽ३१उवाऽ२ । तरत्समन्दीधावति ॥
प्रायम् ॥ इन्द्रस्यकाऽ२ । मियमाऽ३१उवाऽ२ । धारासुतस्यान्धसः ॥ वात्सम् ॥
नपूर्वआऽ२ । युनियाऽ३१उवाऽ२ । तरत्समन्दीधावति ॥ जातम् ॥
रिहन्तिमाऽ२ । तरआऽ३१उवाऽ२३ ॥ इड्स्थिइडाऽ२३४५ ॥
( दी० ८ । प० १६ । मा० १४ )२४( टी । ५१ )

[ साम-तन्त्र-सूत्राणि ][४९]२२ मराया ९ २ १, [५०]२३ ( पृथक् सूत्राणि न सन्ति )
[५१]२४ धाऽतीषगे १३ १ ३; सिच १३ २ ७, आनी खि २ ६ १,

३२ धर्त्ता दिवः पवते० । ( ऋ० ९ । ७६ । १, सा ५५८, १२२८, ग्रा गे. ११०७-११०८ )

---

( ३२।१ ) ॥ प्राजापत्याश्चत्वारः पदस्तोमा गोतमो वा वैश्वामित्रावैन्द्राग्ना
विश्वेदेवा वा । अपेडपदस्तोममिदम् । ( प्रथममिति वैदिकसंकेत ) ॥ प्रजापति जगती सोम ।
हाह । हौवाओऽ२३४वा । (द्वे त्रिः) । ए । औहोहोवाहाउ । वा । इडा ।
धर्त्तादिवःपवतेकृत्व्योरसः । इडा ॥ इडा । दक्षोदेवानामनुमाद्योनृभिः ।
इडा ॥ इडा । हरिःसृजानोअत्योनसत्वभिः । इडा ॥ इडा । वृथापाजाꣳसिकृणुपेनदीष्वाऽ१ ।
हाह । हौवाओऽ२३४वा । (द्वे त्रिः) । ए । औहोहोवाहाउ । वा । इडा ॥

( दी० ४७ । प० ३० । मा० १७ )२५( ना । ५२ )

( ३२।२ ) ॥ षडिडपदस्तोमः (द्वितीयमिति वैदिकसंकेत.) गोतमः ।
हाउहाउहाउ । हौवाओऽ२३४वा । ए । औहोहोवाहाउ । वा । धर्त्तादिवःपवा ।
इडा । तकृत्व्योरसः ॥ इडा । दक्षोदेवानामनुमाद्योनृभिः । इडा ॥ हरिःसृजानआ ।
इडा । त्योनसत्वभिः ॥ इडा । वृथापाजाꣳसिकृणुपेनदीष्वाऽ१ । हाउ(३) ।
हौवाओऽ२३४वा । ए । औहोहोवाहाउ । वा ॥ इडा ॥( दी० ४४ । प० २२ । मा० १४ )२६( थी । ५३ )

( ३२।३ ) ॥ चतुरिडपदस्तोमः ( तृतीयमिति वैदिकसंकेत )। विश्वामित्रः ।
आंहोहोवाऽ२ । आंवाऽ२ । ए । औहोहोवाहाउ । वा । धर्त्तोदिवःपवा ।
इडा । तकृत्व्योरसः ॥ दक्षोदेवानामा । इडा । नुमाद्योनृभिः ॥ हरिःसृजानआ ।
इडा । त्योनसत्वभिः ॥ वृथापाजाꣳसिकृ । इडा । औहोहोवाऽ२ ।
आंवाऽ२ । ए । औहोहोवाहाउ । वा ॥ णुपेनदीष्वाऽ१ ॥

( दी० ४२ । प० २२ । मा० ६ )२७( छू । ५४ )

( ३२।४ ) ॥ द्विरिडपदस्तोमः ( चतुर्थमिति वैदिकसंकेतः ) ॥ इन्द्राग्नी वा ।
आऔहोवाहाइ । ए । औहोहोवाहाउ । वा । धर्त्ता । दीऽ२ । वःप । वा ।
तकृत्व्यः ॥ रसः । दक्षादेवानामनुमाद्यानृभिः । इडा ॥ हरिः । सा ।
जानाअ । त्यान ॥ सत्वभिः । वृथापाजाꣳसिकृणुपेनदीष्वाऽ१ । आऔहोवाहाइ ।
ए । औहोहोवाहाउ । वा ॥ इडा ॥ ( दी० ३० । प० २३ । मा० १२ )२८( वा । ५५ )

॥ त्रयोदश चतुर्थ खण्ड ॥ ४ ॥

॥ इति (ग्रामे) आरण्यकगाने प्रथम प्रपाठक ॥ १ ॥

---

[ साम-तन्त्र-सूत्राणि ] [५२]२५ [५३]२६( पृथक् सूत्राणि न सन्ति ) पदस्तोभ आकण्ठपे जिन्वन् १३.९.८, डाऽदेश २ १० ६। [५४]२७ स्वेजौ ५ २ १, [५५]२८ ( पृथक् सूत्राणि न सन्ति )

## ३३ चर्षणीधृतं मघवानम्० । ( ऋ० ३।५१।१; सा. ३७४, ग्रा गे ६४३ )

( ३३।१ ) ॥ दशसंसर्पाणि, महासर्पाणि, सर्पसामानि वा, सर्पम् । अथापरं
याम्रत्राणि चत्वारि अग्निर्जगतीन्द्र । ( तत्र प्रथममिदम् ) ॥

अभाइमाहे । (त्रिः)। चर्षणीधृतंमघवानऽ३मुक्थाऽ१याऽ२म्॥ इन्द्रंगिरोबृहतीरम्यऽ३नूषाऽ१ताऽ२॥
वावृधानंपुरुहूतंसुऽ३वाक्तोऽ१इमीऽ२ः॥ अमर्त्यंजरमाणंदिऽ३वाइदाऽ१इवेऽ२ ।
अभाइमाहे । (द्वि ) । अभाऽ२३इ । माऽ२ । हाऽ२३४ । औहोवा॥ सर्पसुवाऽ२३४५ः ॥
( दी० १० । प० १४ । मा० १२ )१( भा । ५६ )

( ३३।२ ) ॥ पृथिव्याश्च सर्पम् ( प्रसर्पम् ) । अथापरं याम्रत्राणि चत्वारि पृथिवीजगतीन्द्र ।
( तत्रद्वितीयमिदम् )॥

अभिप्रमंहिऽ३राइमाहे । (त्रिः) । चर्षणीधृतंमघवानऽ३मुक्थाऽ१याऽ२म् ॥
इन्द्राङ्गिरोबृहतीरम्यऽ३नूषाऽ१ताऽ२॥ वावृधानंपुरुहूतंसुऽ३वाक्तोऽ१इमीऽ२ः ॥
अमर्त्यंजरमाणंदिऽ३वाइदाऽ१इवेऽ२ । अभिप्रमंहिऽ३राइमाहे ।(द्वि )।
अभिप्रमंहिऽ३राऽ२३इ । माऽ२ । हाऽ२३४ । औहोवा॥ प्रसर्पसुवाऽ२३४५ः ॥
( दी० १० । प० १४ । मा० १२ ) २( भा । ५७ )

( ३३।३ ) ॥ वायोश्च सर्पम् ( उत्सर्पम् ) । किञ्च अथापरं याम्रत्राणि चत्वारि वायुर्जगतीसोम ।
( तत्र तृतीयमिदम् ) ।

हाउहाउहाउवा । चर्षणीधृतंमघवानमुक्थ्यम् ॥ हाउ(३)वा । इन्द्रंगिरोबृहतीरम्यनूषत ॥
हाउ(३)वा । वावृधानंपुरुहूतंसुवृक्तिभिः ॥ हाउ(३)वा । अमर्त्यंजरमाणन्दिवेदिवे ।
हाउ(३)वा ॥ उत्सर्पसुवाऽ२३४५ः ॥ ( दी० ११ । प० १० । मा० १८ )३( दै । ५८ )

---

[ साम-तन्त्र-सूत्राणि ] [५६]१[५७]२ ( पृथक् सूत्राणि न सन्ति ) [५८]३ मर्हत तु ११.४.१.
तीवुष्यां भि ११.४.७.

३४ तवेदिन्द्रावमं वसु० । ( ऋ० ७ । ३२ । १६; सा २७०; ग्रा. गे ४६६ )

३५ अभि प्रियाणि पवते० । ( ऋ. ९।७५।१, सा. ५५४,७००, ग्रा. गे. १०८९-१०९५ )

---

(३४।१) ॥ अन्तरिक्षस्य सर्पम् अन्तरिक्षोबृहतीन्द्र । किञ्च अथापरं ग्राम्रवाणि चत्वारि ।(तत्र तुरीयमिदम्)॥

हाउ(३)वा । सुवस्सꣳसर्पन्तः । तवेदिन्द्रावमंवसु॥ हाउ(३)वा । सुवस्सꣳसर्पन्तः ।
त्वंपुष्यसिमध्यमम्॥ हाउ(३)वा । सुवस्सꣳसर्पन्तः । सत्राविश्वस्यपरमस्यराजसि॥
हाउ(३)वा । सुवस्सꣳसर्पन्तः । नकिष्ट्वागोपुवृण्वते । हाउ(३)वा ॥ सुवस्सꣳसर्पन्तः ।
ए । सर्पतप्रसर्पतसुवर्गमेमचेयम् ॥ ( दी० १० । प० १६ । मा० २२ )४( पा । ५९ )

(३४।२) ॥ आदित्यम्, आदित्यस्य च सर्पम् आदित्योबृहतीन्द्रः । किञ्च अथापरं पावमानानि चत्वारि ।
( तत्र प्रथममिदम् ) ॥

सुवस्सꣳसार्पसꣳसर्पाऽ२ । ( द्विः ) । सुवस्सꣳसार्पसम् । साऽ२ । पाऽ२३४ ।
औहोवा । तवेदिन्द्रारमंवसु॥ त्वंपुष्यसिमध्यमम्॥ सत्राविश्वस्यपरमस्यराजसि ॥
नकिष्ट्वागोपुवृण्वते । सुवस्सꣳसार्पसꣳसर्पाऽ२ । (द्वि) । सुवस्सꣳसार्पसम् । साऽ२ ।
पाऽ२३४ । औहोवा॥ एऽ३ । सुवर्गमेमाऽ२३४५॥ ( दी० १२ । प० १८ । मा० ३ )५( जि । ६० )

( ३५।१ ) ॥ दिवश्च सर्पम् द्यौर्जगती सूर्य । किञ्च अथापरं पावमानानि चत्वारि ।
( तत्र द्वितीयमिदम् ) ॥

सूपायप्रसृ । पा । इहा । ईऽ३या । ( चत्वारित्रिः ) । अभिप्रियाणिपवतेचऽ३नोहाऽ१इताऽ२ः ॥
नामानियह्वोअधियेषुऽ३वार्द्धोऽ१ताऽ२इ॥ आसूर्यस्यबृहतोबृऽ३हानाऽ१धीऽ२ ॥
रथंविष्वंचमरुहद्विऽ३चाक्षाऽ१णाऽ२ः । सूपायप्रसृ । पा । इहा । ईऽ३या । ( चत्वारि द्विः ) ।
सूपायप्रसृ । पा । इहा । ईऽ२ । याऽ२३४ । औहोवा॥ ए । सूपायप्रसृपाय ।
( द्वे द्विः ) । ए । सूपायप्रसृपायाऽ२३४५ ॥ ( दी० २६ । प० ३६ । मा० ५ )६ ( कु । ६१ )

---

[ साम-तन्त्र-सूत्राणि ] [५९]४[६०]५[६१]६ ( पृथक् सूत्राणि न सन्ति )

कुत्स आङ्गिरस । पवमान सोम । त्रिष्टुप् । ( ऋ॰ ९।९७।५८ )

त्वया वयं पवमानेन सोम भरे कृतं वि चिनुयाम शश्वत् ।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ ५९० ॥

३६ त्वया वयं पवमानेन सोम भरे कृतं वि चिनुयाम शश्वत् ।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ ५९० ।

३७ स्वादोरित्था विषूवतः० । ( ऋ. १।८४।१०; सा. ४०९, १००५; मा. गे. ७१३ )

---

( ३६।१ ) ॥ अपां सर्पसाम । आप त्रिष्टुप्सोम लिंगोक्ता वा ॥

सूपायप्रसु । पा । ओहा । ईऽ३या । ( चत्वारि त्रिः ) । त्वयावयंपवमानेनसोमा ॥
भरेकृतंविचिनुयामशाश्वात् ॥ तन्नोमित्रोवरुणामामहान्ताम् ॥ अदितिस्सिन्धुःपृथिवीउताद्यौः ।
सूपायप्रसु । पा । ओहा । ईऽ३या । ( चत्वारि त्रिः ) । सूपायप्रसु ।
पा । ओहा । ईऽ२ । याऽ२३४ । औहोवा ॥ ए । सुवः । ए । सुवः । ए ।
सुवाऽ२३४५ः ॥ ( दी॰ २७ । प॰ ३६ । मा॰ ७ )७( चे । ६२ )

( ३६।२ ) ॥ समुद्रस्य सर्पसाम । समुद्र-त्रिष्टुप्सोम· लिंगोक्ता वा ॥

सूपायप्रसृ । पा । ओहा । ( त्रीणि त्रिः ) । त्वयावयंपवमानेनसोमा ॥
भरेकृतंविचिनुयामशाश्वात् ॥ तन्नोमित्रोवरुणामामहान्ताम् ॥ अदितिस्सिन्धुःपृथिवीउताद्यौः ।
सूपायप्रसृ । पा । ओहा । ( त्रीणि त्रिः ) । सूपायप्रसृ । पा । आऽ२ ।
हाऽ२३४ । औहोवा । सुवः । ए । सुवः । ए । सुवः । एऽ२३४५ ॥
( दी॰ ३१ । प॰ ३० । मा॰ ७ )८( टे । ६३ )

( ३७।१ ) ॥ मांधवे द्वे, सर्पसर्पे द्वे वा । ऋषी मण्डू-पङ्क्तिरिन्द्रः ॥

स्वादोरित्थाविषूवताएहाउ ॥ मधोःपिबन्तिगौरियाएहाउ । याइन्द्रेणसयावरीएहाउ ॥
वृष्णामदन्तिशोभथाएहाउ ॥ वस्वीरनुस्वराजियामऽ३हाउ । वा । ए ।
दिशःप्रदिशःक । पाऽ२ । ताऽ२३४ । औहोवा ॥ ए । राजंगमंमस्राजंगमंमाऽ२३४५ ॥
( दी॰ २६ । प॰ ११ । मा॰ १० )९( गां । ६४ )

---

[साम-तन्त्र-सूत्राणि] [६१]७[६३]८ ( पृथक् सूत्राणि न सन्ति ) [६४]९ रम इदाता ८ ३ ७, इदं ११.९.१०,

@

३८ त्वामिन्द्र प्रतूर्तिष्वभि० । ( ऋ ८ । ९९ । ५, सा. ३११, १६३७, प्रा. गे ५२५ )

३९ बण्महाँ असि सूर्य० । ( ऋ. ८ । १०१ । ११; सा. २७६, १७८८; प्रा. गे ४७८ )

वामदेवो गौतम । विश्वे देवा । एकपाज्जगती । ( न ऋग्वेदीय )

४० इमं वृषणं कृणुतैकामिन्माम् ॥ ५९१ ॥

---

( ३७।२ )

स्वादोरित्थाविषूवताओहाउ ॥ मधोऽपिबन्तिगौरियाओहाउ । याइन्द्रेणसयावरीओहाउ ॥

वृष्णामदन्तिशोभथाओहाउ ॥ वस्वीरनुस्वराजियामोऽ३हाउ । वा । ए ।

उद्दिशोविदिशऽक । पाऽ२ । ताऽ२३४ । औहोवा ॥ ए । विराजंगममस्नराजंगममाऽ२३४५ ॥

( दी० २७ । प० १३ । मा० १० )१०( जौ । ६५ )

दश पञ्चम खण्ड ॥ ५ ॥

( ३८।१ ) ॥ त्रिरेधिम् । बृहत्साम रथन्तरम् वामदेव्य एवं रूपम् प्रजापतिःपथ्याबृहतीन्द्रः ॥

औहोइत्वामिन्द्रप्रतूर्त्तिपूऽ३ए ॥ अभाइवाइश्वाः । आसिस्थाऽ२३४द्धोः ॥ श्री ॥

आशस्तिहाजनिताधृ । त्रतूऽ२३रसाइ ॥ श्री ॥ तुवाऽ२३०तूर्या ॥ तरोहोऽ३ ।

हीम्माऽ२ ॥ ष्याऽ२तोऽ३५हाइ ॥ ( दी० ७ । प० ९ । मा० ८ )११ ( श्रै । ६६ )

(३९।१) ॥ यक्षसाराथिप्रजापतिर्बृहती सूर्यः ॥

एवाण्मा ॥ हा४असिमूऽ२रिया । इडा । बृ । हाउवा । आथा ॥

वाडा ॥ दित्यमहा४ऽ२असाइ । इडा । हरिः । हाउवा । आथा ॥ माहः ॥

तेसतोमहिमापनाऽ२इष्टमा । इडा । मतिः । हाउवा । आथा ॥ माह्वा ॥

देवमहाऽ२४असाइ ॥ इडाऽ२३४५ ॥ ( दी० ८ । प० २१ । मा० १२ )१२( पा । ६७ )

(४०।१) ॥ वृषाप्रजापतिरेकपदात्रिष्टुप् विश्वेदेवाः ॥

इमाओवा । ( त्रि ) । इमाऽ३ । ओइ । इमाऽ२ । ओइ । इमाऽ३ ।

ओऽ२३४वा ॥ वृषाआवा । ( त्रि ) । वृषाऽ३ । ओइ । ( द्वे द्वि ) । वृषाऽ३ ।

ओऽ२३४वा । णंकृणावता । एकाआवा । ( त्रि ) । एकाऽ३ । ओइ । ( द्वे द्वि ) ।

एकाऽ३ । ओऽ२३४वा ॥ इन्माऽ२३४५म् ॥ ( दी० ३५ । प० २५ । मा० १६ )१३ ( भू । ६८ )

---

[साम-तन्त्र-सूत्राणि] [६५]१० [६६]११ (पृथक् सूत्राणि न सन्ति ) [६७]१२ सु साराथि निहाउवायाम् १२ ११ ३।

[६८]१३ तै ८.५ ६; पंसू १ ० ४ ४, ७ अस्मिन् साम्नि प्रतिहारविभाग "एकं वृषा निवक्रायम्" "ओवन्तो वा नर इष्ट" इति प्रतिहारसूत्राच्च ।( १ ११ २९,३० ) द्रष्टव्य ।

४१ य एक इद्विदयते० । ( ऋ १।८४।७, सा ३८९, १३४१, ग्रा गे ६५४ ६५६ )

४२ यो न इदमिदं पुरा० । ( ऋ ८।२१।९, सा ४००, ग्रा गे ६९६-६९७ )

४३ अभ्रातृव्यो अनात्वम्० । ( ऋ ८।२१।१३ सा. ३९९, १३८९, ग्रा. गे ६९५ )

---

( ४१।१ ) × ॥ एकवृष प्रजापतिरुष्णिगिन्द्रः ॥

हाहिम् । ( त्रि ) । योवा । ( त्रि ) । योवाहाइ । ( त्रि ) । यएकइद्विदयते ।
एकꣳसमैरयद्वृध ॥ वसुमर्त्तायदाशुषे । एकꣳसमैरयन्मह ॥ ईशानोअप्रतिष्कुतः ।
एकोवृषाविराजति ॥ इन्द्रोअंग । हाहिम् । ( त्रि ) । योवा । ( त्रि ) ।
योवाहाइ । ( द्वि ) । योवा॒ऽ२हाउ । वाऽ३ । ईऽ२३४५ ॥

( दी० ५९ । प० २७ । मा० १७ )१४ ( ग्रे । ६९ )

( ४२।१ ) ॥ चित्ररथप्रजापतिः ककुविन्द्रः ॥

होवाहाइ । योनः ॥ होवाहाइ । ( त्रि ) । औहोवाहाइ । ( त्रि ) । इदामे ।
( द्वि ) । पुराए । होवाहाइ । ( त्रि ) । औहोवाहाइ । ( त्रि ) । प्रवाए ।
स्यआए । निनाए । होवाहाइ । ( त्रि ) । औहोवाहाइ । ( त्रि ) ।
यतामे । उवाए । स्तुपाए ॥ होवाहाइ । ( त्रि ) । औहोवाहाइ । ( त्रि ) ।
सखाए । यआए । द्रमूए । तथाए । होवाहाइ । ( त्रि ) । औहोवाहाइ । ( द्वि ) ।
औहोवाऽ२हाउ । वाऽ३ ॥ हस्ꣳस्थिबृहन्नमाऽ२३४५ः ॥

( दी० ८९ । प० ४७ । म० ४६ )१५( धू ७० )

( ४३।१ ) ॥ अभ्रातृव्यम् ( भ्रातृव्यम् वा ) प्रजापति ककुविन्द्रः ॥

हाउहाउहाउ । हुवेविराजꣳस्वराजम् । ( त्रि ) । हाओवा । ( त्रि ) ।
हाऽ३ओऽ२३४वा । ( द्वि ) । हाउवा । महत्सामअजीजने । अभ्रातृव्योअनात्वम् ॥
महद्भद्रमजीजने । अनापिरिन्द्रजनुषासनाद ॥ स्वभ्रातृव्यमजीजने ।
युधेदापित्वमिच्छसे ॥ हाउ(३) । हुवेविराजꣳस्वराजम् । ( त्रि ) । हाओवा । ( त्रि )
हाऽ३ओऽ२३४वा । ( द्वि ) । हाउ(३)वाऽ३ ॥ एऽ३ । अभिभूरसीऽ२३४५ ॥

( दी० ५४ । प० २८ । मा० २७ )१६ ( दे । ७१ )

---

[साम-तन्त्र-सूत्राणि][६९]१४[७०]१५[७१]१६ ( पृथक् सूत्राणि न सन्ति )

× प्रतिहार विभाग प्रतिहारसूत्रे द्रष्टव्य । [ प्रति- सू १।११।३१ ]

